॥ श्रीः ॥

नरसिंहकविरचितं

# कादम्बरीकल्याणं नाटकम

---

मद्रपुरीराजकीयलिखितपुस्तकशालाप्रधानपण्डितेन
व्याकरणशिरोमणिना वे. कृष्णमाचार्येण
संशोधितम् ।

---

मद्रपुरी एड्युकेषनल् पब्लिषिङ् समित्या प्रकाशितम् ।

१९३६. [Price Rs. 2 net-

# KADAMBARI KALYANAM.

## PUBLISHERS' NOTE.

It is a matter, not for mere self-congratulation, but for devout thankfulness, that it has been our good fortune to place before the Sanskrit world this Drama, entitled Kadambari Kalyanam in eight Acts. It is not a recent production, and it has therefore preserved the characterestics of Sanskrit dramaturgy, with minor variations that changing times naturally introduce. The Author, Narasimha Kavi, has roughly been placed in the fourteenth century A. D., and has thus a place in the long line of artists that created indigenous Sanskrit dramatic literature.

The learned Editor has brought all his learning to bear upon making the book worthy of publication and has also taken the greatest pains in writing a Scholarly introduction, in correcting the proofs and in drawing up an index of verses found in the drama ; and we cannot thank him enough for his help.

We hope that the book will be judged worthy of study, by the Indian Universities and by all lovers of Sanskrit.

THE PUBLISHERS.

# उपोद्घातः

---

"बाणोच्छिष्टं जगत्सर्वम्" इति सार्वजनिकयशसा महाकविना बाणभट्टेन रचितं विविधरसभावमेदुरं सहृदयहृदयंगमरचनारीतिबृंहितं रसिकजनमनोहारिवर्णनाशैलीपुष्कलं निस्तुलकथासंघटनरामणीयकस्पृहणीयं कादम्बरीनामकं गद्यमयं काव्यरत्नं कस्य वा सचेतसो नावर्जयति मनः। काव्येऽस्मिन् दृश्यमाना कवेरस्य पदविन्यासशैली वाक्यगमनिकावैखरी स्वभाववर्णनानैपुणी अतिशयोक्तिपरिपोषचातुरी च कविभिरन्यैर्दुरवापेति नूनमिदममत्सराणां सहृदयानामव्याजमान्तराशयाविष्करणम्। "कादम्बरीरसज्ञानामाहारोऽपि न रोचते" इत्याभाणकोऽपि न मात्रयाप्यभूतार्थवादः, किंतु यथावदनुभूत एवार्थोऽसकृद्भावनानिकषकषितो भावुकैराविष्कृतः। बाणभट्टः कान्यकुब्जाधीशस्य स्थाण्वीश्वरनगरीपतेर्हर्षवर्धनस्यास्थानीमलमकृतेत्यदसीयेन हर्षचरितेनावगम्यते। हर्षवर्धनस्य राज्यनिर्वाहसमयः क्रिस्तुशकस्य ६०६ प्रभृति ६४८ पर्यन्त इति निरणायि चरित्रविमर्शकैरिति क्रिस्तुशकस्य सप्तमशतकपूर्वार्धमेव बाणभट्टस्य काल इति नात्र किमपि वक्तव्यमस्माकमवशिष्यते।

तत्र कादम्बर्यां बाणभट्टेन प्रतिपाद्यमाना कथा कादम्बरीं महाश्वेतां चेति दिव्याङ्गनाद्वयमनुबध्नती चन्द्रापीडपुण्डरीकयोर्जननभेदसंगतं परस्परव्यामिश्रं च वृत्तान्तं प्रतिपादयन्त्यलसचेतसां तदवगतौ किंचिदिव क्लेशं जनयतीति बहूनामभिसन्धिः।

एतदवेक्ष्यैव अभिनन्दनामा काश्मीरिकः कविः (क्रिस्तुनवमशतके) कथामेतां संगृह्य कादम्बरीकथासारं नाम पद्यकाव्यमग्रथ्नात्[1]। ततः क्षेमेन्द्रनामान्योऽपि कश्चित्काश्मीरिकः कविः (क्रिस्तु १०९०) पद्यकादम्बरीं नाम कादम्बरीकथासंग्रहरूपं काव्यमारचयत्[2]। परं त्वनयोरपि प्रयासो नात्यन्ताय फलेग्रहिः समजायत, यतस्ततोऽपि न शक्नुवन्त्युत्तानमतयः कथामेतामक्लेशेनावगन्तुम्। अस्मिन् प्रसङ्गेऽन्योऽपि विषयो विमर्शकैरवधेयः। औचित्यविचारचर्चायां क्षेमेन्द्रो बाणभट्टकर्तृकं कादम्बरीविरहतापवर्णनपरं पद्यमेकमुदाहरति। तद्यथा—"यथा वा बाणभट्टस्य,

हारो जलार्द्रवसनं नलिनीदलानि
प्रालेयशीकरमुचस्तुहिनांशुभासः।
यस्येन्धनानि सरसानि च चन्दनानि
निर्वाणमेष्यति कथं स मनोभवाग्निः॥" इति[3]।

अतो बाणभट्टेन कादम्बरीकथाप्रतिपादकं काव्यान्तरमपि कृतमित्यवगम्यते। तत्पद्यकाव्यं वा नाटकं वा स्यादिति समुन्नेतुमस्त्यवकाशः। परं त्वनेके कवय आलंकारिकाश्च बाणमनु जाता अपि सर्वेऽपि ते तत्काव्यमपरिपालयन्तः स्वरूपनाशं प्रणंष्टुमन्वमंसतेति महदिदं विषादस्थानं काव्यरसास्वादलोलुपस्य सहृदयलोकस्य। एवमेषा कादम्बरी चिरात् श्रव्यभाव एवावतस्थुषी नाध्यगच्छत्पण्डितपामरसाधारण्येन रस्यतातिशयम्। नूनमेषा महती न्यूनतास्माकं वाङ्मये चिरादप्रतीकारावतिष्ठ।

1. *See* Kāvyamālā Series No 11.

2. *See* for quotations Kavikaṇṭhābharaṇa, Kāvyamālā Part No. IV.

3. *See* Kāvyamālā Part No. 1 Page 121.

विषयो यथा सकृदपि प्रत्यक्षतो निरूपितो बुद्धौ प्रतिरूपकगृहीत इव केनाप्यविचाल्यां प्रतिष्ठामाधत्ते, न तथा पुनः पुनर्निशम्यमानोऽपि। किं बहुना। न केवलं काव्येषु, सर्वेषु शास्त्रेष्वप्येषैव रीतिः। प्रबोधचन्द्रोदयसंकल्पसूर्योदयादीन्यपि नाटकानि श्रुतिशिखरनिकरोदितं तत्त्वजातं सम्यगवबोधयितुमेव तत्तन्मतप्रवर्तकैर्निरमायिषत। विद्यन्ते चान्यान्यप्येवंविधानि अनुमितिपरिणयार्थपञ्चकनाटकपूर्णपुरुषार्थचन्द्रोदयविद्यापरिणयविवेकविजयादीनि नाटकानि। तथा चानुभवरसिकानामभियुक्तानां सूक्तिः—

"न तच्छास्त्रं न सा विद्या न तच्छिल्पं न ताः कलाः।
नासौ योगो न तज्ज्ञानं नाटके यन्न दृश्यते॥"

(संकल्पसूर्योदयः १-२०.)

"चातुर्विध्यममुष्यपङ्कजभुवा वेदेभ्य उद्भावितं
कर्तुं भूतभविष्यतोरलमिदं प्रत्यक्षतामर्थयोः।
अङ्गत्वं प्रतिपद्य चास्य सकलाः कामं स्वदन्ते कलाः
साम्राज्यस्य फलं न कस्य हृदयोल्लासाय नाट्यामृतम्॥"

(कादम्बरीकल्याणम् ५-९.)

सर्वमेतदभिसंदधानो नरसिंहनामा कविस्तामेतां कादम्बरीकथां कादम्बरीकल्याणनाम्ना नाटकेनाभिनेयार्थां न्यबध्नात्। कादम्बर्यां कथा यादृशेन रसपरिपोषेणायोजिता, सात्र तादृशेन क्वचित्तदधिकेन च रसपरिपोषेण योजितेति स्वयमेव प्रेक्षावन्तो ज्ञास्यन्ति। कथा च यादृशेन क्रमेण प्रदर्श्यमाना सुग्रहा हृदयंगमा च भवेत्, तादृशेन क्रमेणात्र संनिवेशिता। नाटकेऽस्मिन् चन्द्रापीडस्य दिग्विजयार्थं प्रस्थितस्य मृगयाप्रसङ्गेन किंनर-

मिथुनानुसारमारभ्य शापावसाने शूद्रकदेहविमोकानन्तरं कादम्बरीपाणिग्रहणपर्यन्तः कथाभाग उपनिबद्धः। पञ्चमेऽङ्के महाश्वेतापुण्डरीकनाम्ना कादम्बरीग्रथितवस्तुनान्तर्नाटितकेन महाश्वेतापुण्डरीकयोर्वृत्तान्तो रमणीयतरं प्रदर्शितः। तत्र वलाहकद्वितीयं वैशम्पायनं प्रेक्षकं परिकल्प्य पुण्डरीकवृत्तान्तं प्रदर्शयता कविना स्वस्यानन्यसाधारणं रसास्वादनैपुणमाविष्कृतम्। व्यतीते जनुषि पुण्डरीकनाम्नः स्वस्यैव चेष्टितं वचनं च सर्वमन्तर्नाटितकेऽपरोक्षयन् वैशम्पायनः पदे पदे 'इदमित्थम्'इति विवेक्तुमशक्यं कमपि चित्तविकारमधिगच्छन् सुहृदा वलाहकेन तत्तत्कालोचितैर्वचनैः प्रकृतिमुपनीयत इति महतीयं चमत्क्रिया रसास्वादनिपुणानाम्। तथा अष्टमेऽङ्के रोहिण्या देव्या मायया विलासवतीतारापीडशुकनासानां पुरतः प्रदर्श्यमानः शूद्रकमातङ्गीशुकवृत्तान्तः सामाजिकानां मनः सम्यगावर्जयति। किं बहुना। नाटकमिदं यया कयाचित्समित्या यदि प्रयोगदशामुपनीयेत, मन्यामहे तदैतस्य समग्रो रसोऽनुभूयेतेति।

कविरयमस्मिन्नाटके आत्मानं सिद्धनाथतनयस्य गङ्गाधरकवेर्मध्यमं तनयं विश्वनाथकवेरनुजं च निर्दिशति[1]। कोऽयं विश्वनाथकविर्यस्यायं नरसिंहकविरनुज इति विमर्शे सौगन्धिकाहरणकर्ता विश्वनाथ एवेत्युपपन्नाभिर्युक्तिभिर्निर्णेतुमस्त्यवकाशः। तथाहि सौगन्धिकाहरणे विश्वनाथकविरात्मानं प्रतापरुद्रदेवसभासदं बालभारतादिग्रन्थकर्तुरगस्त्यपण्डितस्य भागिनेयं चावेदयति[2]। यद्यपि सौगन्धिकाहरणे विश्वनाथकविरात्मानं

---

1. *See* Kādambarīkalyāṇa 1—5, 6 and 7.
2. *See* Kāvyamālā Series No 74 :—

" सूत्रधारः—राज्ञा प्रतापरुद्रेण संभावितैः सभासद्भिराहूय समाविष्टोऽस्मि। * * *

गङ्गाधरकवेः पुत्र इति नरसिंहकवेरग्रज इति वा न साक्षान्निर्दिशति, तथापि प्रमाणान्तरबलादेवमवधार्यते । तथाहि—गङ्गादेवी स्वकृते मधुराविजयनाम्नि कम्परायचरितकाव्ये, आत्मानं विश्वनाथकवेरधिगतविद्यामाचक्षाणा प्राचेतसादिपूर्वकवीनां नमस्कारप्रसङ्गेन अगस्त्यपण्डितं, ततो गङ्गाधरं, ततो विश्वनाथं च निर्दिशति[1] । कविनामनिर्देशे परिगृहीतेनानेन पौर्वापर्येण ज्ञायते अगस्त्यगङ्गाधरविश्वनाथाः परस्परं यौनतो विद्यातो वा संबद्धा इति । सौगन्धिकाहरणकादम्बरीनाटकयोः संशीलने ज्ञायते तेषामित्थं परस्परसंबन्धः—अगस्त्यपण्डितस्यावुत्तः (भगिनीपतिः) गङ्गाधरः; गङ्गाधरस्य तनया विश्वनाथनरसिंहौ अन्य-

---

विश्वनाथ इति ख्यातः कविरस्ति यदुक्तयः ।
अकाञ्चनमरत्नं च विदुषां कर्णभूषणम् ॥

अथवा—

वाचस्तस्य कवेरुदारमधुरा इत्यत्र चित्रं किमु
प्रख्यातः सकलासु दिक्षु गुणिषु श्रेयानगस्त्यः सुधीः ।
वेधश्चन्द्रमुखीकराङ्गुलिदलासङ्गक्वणद्वल्लकी-
वाचोयुक्तिसहोक्तिदर्शितसुधाजन्मा स यन्मातुलः ॥"

1. मधुराविजये—

" चतुःसप्ततिकाव्योक्तिव्यक्तवैदुष्यसंपदे ।
अगस्त्याय जगत्यस्मिन् स्पृहयेत्को न कोविदः ॥

स्तुमस्तमपरं व्यासं गङ्गाधरमहाकविम् ।
नाटकच्छद्मना दृष्टां यश्चक्रे भारतीं कथाम् ॥
चिरं स विजयी भूयाद्विश्वनाथः कवीश्वरः ।
यस्य प्रसादात्सार्वज्ञ्यं समिन्धे मादृशेष्वपि ॥"

श्चानिर्दिष्टनामधेयः; विश्वनाथनरसिंहयोः विश्वनाथो ज्येष्ठः नरसिंहस्तदनन्तरजः; अन्यश्च सर्वकनिष्ठ इति। मधुराविजयेन च गङ्गादेवी विश्वनाथकवेः शिष्या, अगस्त्यपण्डितः चतुःसप्ततिकाव्यानां कर्ता, गङ्गाधरकविर्महाभारतनाटककर्तेति च विज्ञायते।

यतो विश्वनाथः सौगन्धिकाहरणे आत्मानं प्रतापरुद्रदेवसभासदमाचष्टे, ततः प्रतापरुद्रदेवस्य राज्यभरणकाल एव विश्वनाथस्य सौगन्धिकाहरणनिर्माणकालः; स एवोपदशैरुपविंशैर्वा वत्सरैर्व्यतीतो नरसिंहकवेः कादम्बरीकल्याणनाटकनिर्माणकाल इति चायाति। प्रतापरुद्रदेवराज्यभरणकालः काञ्चीपुरादिषूपलब्धैस्तदीयैः शासनैः क्रिस्तु १२९२ आरभ्य १३२६ पर्यन्त इति ज्ञायते। एवं च क्रिस्तुशकस्य चतुर्दशशतकप्रथमद्वितीयपादयोर्विश्वनाथकविः सौगन्धिकाहरणमरचयत्, तदनुजो नरसिंहकविस्तस्यैव शतकस्य द्वितीयपादान्ते तृतीयपादादौ वा कादम्बरीकल्याणमकृतेति चोन्नेतुमस्ति पर्याप्तोऽवकाशः। संवदति चैष कालनिर्णयो विश्वनाथशिष्याया गङ्गादेव्याः कालेन। गङ्गादेवी हि कम्पणनाम्नो राज्ञो महिषीति मधुराविजयसप्तमसर्गपर्यालोचनेनावगम्यते। कम्पणस्य द्रमिडेषु राज्यकालश्च अम्बरपाक्कादिस्थतदीयशासनेन शकसंवत्सर १२८२ आरभ्य १२९६ पर्यन्तः = क्रिस्तुशक १३६० आरभ्य १३७४ पर्यन्त इत्यवगम्यते। चतुर्दशशतकप्रथमद्वितीयपादयोर्लब्धप्रतिष्ठाद्विश्वनाथात् प्रथमे वयसि गृहीतविद्या गङ्गादेवी क्रि° १३६० आरभ्य १३७४ पर्यन्ते काले महिषीपदमवाप; तदन्त्यभागे मधुरापुरीविजयानन्तरं मधुराविजयं काव्यं निर्ममे इत्यस्ति सांगत्यम्। नरसिंहकवेः कादम्बरीनाटकस्थाः श्लोका वेमभूपालीये साहित्यचिन्तामणावुदाहृता दृश्यन्ते। एतदपि पूर्वं निर्णीतस्य नरसिंहकविकालस्यात्यन्तानुरूपमेव। वेमभूपालस्य राज्य-

निर्वहणकालः क्रिस्तु १४०२ प्रभृति १४२३ पर्यन्त इति निश्चितः। क्रिस्तु चतुर्दशशतकस्य द्वितीयतृतीयपादयोः कृतस्य कादम्बरीनाटकस्य श्लोकानां पञ्चदशशतकप्रथमपादविरचिते साहित्यचिन्तामणावुदाहरणमत्यन्तसंगतमेवेति न काप्यनुपपत्तिः।

कवेरस्य कालनिर्णयौपयिकविषयदानेनोपकृतवतामस्मन्मित्रमणीनां पण्डितप्रवराणां श्रीयुत-वेटूरि प्रभाकरशास्त्रिणामव्याजमौदार्यं संभावयामः।

एतन्मुद्रणे मद्रपुरराजकीयलिखितपुस्तकशालास्थः कोश एव मातृका समजायतेति तत्पुस्तकशालाधिकारिषु महामहोपाध्याय - विद्यावाचस्पति - कुप्पुस्वामिशास्त्रिमहाशयेषु नितरां कार्तज्ञ्यमुद्वहामः।

अन्ततश्चैतन्नाटकप्रकाशने संजातं मद्रपुरी - एडुकेषनल् पब्लिषिङ्ससमितेर्निरतिशयमुत्साहमभिनन्दामः।

MADRAS,
10-4-1936.

इति
वे. कृष्णमाचार्यः.

॥ श्रीः ॥

नरसिंहकविविरचितं

# कादम्बरीकल्याणं

## नाम नाटकम् ।

सौहित्यं विदधाति यः सुमनसां शश्वत्प्रसन्नोदयः
सन्तो यं समुदाहरन्ति महतो देवस्य देहान्तरम् ।
यो भूयः प्रसरं विधूय तमसः संगच्छते ज्योत्स्नया
कल्याणं स करोतु वः कुमुदिनीमित्रः कलानां निधिः ॥ १ ॥

(**नान्द्यन्ते ततः प्रविशति सूत्रधारः**)

**सूत्रधारः**—(सानन्दम्)—

रसिकः कविरद्भुता कथा पदगुम्फो ललितः स्फुटो रसः ।
परिषद्गुणदर्शिनी वयं निपुणास्तत्किमतोऽपि नः प्रियम् ॥ २ ॥

(नेपथ्याभिमुखं परिवृत्य) मारिष ! किमद्यापि न सज्जीकृतानि पात्राणि ? कियच्चिरमवेक्षतामयं नः शोणाचलनाथयात्रायां कादम्बरी-दर्शनोत्सुकः सहृदयसमाजः ?

(प्रविश्य) **पारिपार्श्वकः**—आर्य ! किमुच्यते ? ननु श्राव्य एवैष कादम्बरीनामा भट्टबाणस्य गद्यमयः सूक्तिनिष्यन्दः । अथ पुनः कथमिममभिनिनीषते भावः ?

**सूत्रधारः**—नूनमिदमनाकर्णितं भवता । श्रूयतां तावत्—

उद्भूतभावरसमुज्ज्वलसंविधानं
संख्यावतां भवति कर्णरसायनं यत् ।
केनापि नाटकनिभात् कविना तदेव
काव्यामृतं नयनयोः कृतमातिथेयम् ॥ ३ ॥

**पारिपार्श्वकः**—( सपरितोषम् ) भाव ! यद्येवम्,

शक्यमिदानीं लब्धुं चन्दनतरुकुसुमसौरभानुभवः ।
पार्येत सोऽपि कर्तुं रसिकैः पुण्ड्रेक्षुफलरसास्वादः ॥ ४ ॥

तदस्य वश्यवाचः कवेर्व्यपदेशज्ञापनेनानुग्रहीतव्य एष जनः ।

**सूत्रधारः**—एवम् ; कथयामि—

जानात्येव हि तद्भवान् कविकुलं सभ्यैर्यदभ्यर्हितं
नित्यं संनिदधाति सा भगवती यस्मिन् गिरां देवता ।
तत्रासीत्किल **सिद्धनाथतनयो गङ्गाधरः** पण्डितो
बाहुश्रुत्यविशेषविश्रुतयशाः साहित्यसौहित्यभूः ॥ ५ ॥

तस्यैष मध्यमः पुत्रो **नरसिंह** इतीरितः ।
विश्रुतः स तु कर्तास्याः कृतेरित्यवधारय ॥ ६ ॥

**पारिपार्श्वकः**—( सप्रत्यभिज्ञम् ) भाव, स्थाने खलु ;

अयं दशसु रूपकेष्वपि निरूढिमाढौकितुं
    परं प्रभवतीति नो मनसि मैव भूदद्भुतम् ।
सुधारसतरङ्गिणीसुरभिसूक्तिरस्याग्रजः
    क्षितौ सहृदयाग्रणीर्जयति **विश्वनाथः** कविः ॥ ७ ॥

**सूत्रधारः**—तत्प्रयतस्व भूमिकापरिग्रहणाय ।

**पारिपार्श्वकः**—यदादिशति भावः ।

(इति निष्क्रान्तः)

[ना

**सूत्रधारः**—यावदहमपि रङ्गपूजां संपादयामि (इति परिक्रम्य)

जय जय जगद्विनोदिनि संगीतानन्दसिन्धुचन्द्रकले ।
भरतकुलभद्रदायिनि भगवति रङ्गाधिदेवते मातः ॥ ८ ॥

(इति पुष्पाञ्जलिं विकिरन् अभितो विलोक्य) कथमभिनेतुमप्युपक्रान्तं भरतबृन्देन ! तथाहि—

हस्तान् केचन वर्तयन्ति चतुरं प्रौढाङ्गहारक्रमाः
    संदर्भानितरे रसोचितमितो रागैरुपस्कुर्वते ।
नैपथ्यं दधते यथाहमपरे कोटीरहारादिकं
    भावान् व्यञ्जयितुं विधेयमनसश्चान्ये समुज्जृम्भते ॥ ९ ॥

मया पुनरमीषामशेषाणामपि वर्णिकाविशेषाणां प्रथमप्रवेशनीयस्य दिव्यमुनेः कपिञ्जलस्य वेषः परिग्रहीतव्यः। (इति नेपथ्यान्तिकं गत्वा नाट्येन परिवृत्य) अयमस्मि संविधानबलात् कपिञ्जलत्वमापन्नः।

(इति निष्क्रान्तः)

## प्रस्तावना।

---

(ततः प्रविशति कपिञ्जलः)

**कपिञ्जलः**—अये महान् खलु गतः कालः।

स चन्द्रमाः सोऽपि च पुण्डरीकः
पद्मालयायाः सहजाविह द्वौ।
अन्योन्यशापानुभवार्थमुर्व्यां
जातौ युवानौ किल तावभूताम् ॥ १० ॥

(विमृश्य) अये! भगवतः सुगृहीतनाम्नः श्वेतकेतोः शाश्वते ब्रह्मणि निष्ठितस्यापि भूयिष्ठं पुत्रवात्सल्यम्। यतः—

आकर्ण्य मया कथितं वृत्तं पुत्रस्य तत्तपोरोधि।
आयुष्यमस्य कुरुते किमपि विधानं सुसंहृतामर्षः ॥ ११ ॥

किं च, तेनैव हि दयालुना शिष्यजनदर्शितानुग्रहेण,

उज्झित्वा सुहृदं सुधांशुसविधादावर्तमानस्य मे
पादेनाभिहतः किलाभ्रसरणौ यः कोऽपि वैमानिकः।

अश्वीभावमवाप्नुहीति विदधे यः शापमेष क्रुधा
नीतः सोऽपि महर्षिणाद्य लघुनोपायेन निर्वाह्यताम् ॥१२॥

(स्मरणमभिनीय) नन्विदानीमाज्ञापितोऽहमाचार्येण—'वत्स कपिञ्जल, पुण्डरीकस्य जननी कमलालयेयमेवास्य विधेः शुभोदर्कसंविधाने भृतकङ्कणास्ते। भवता तु वाजिनमयोनिजमिन्द्रायुधमेवानुप्रविश्य चन्द्रापीडमूर्तिश्चन्द्रमाः कादम्बरीप्रसङ्गाय प्रापणीयो वनं चैत्ररथम्। तदनु तदनुसारिणो वैशम्पयनाकृतेस्त्वत्सुहृदोऽपि तामेव महाश्वेतां निमित्तीकृत्य मानुषाद्वपुषो निष्क्रमणं भविष्यति' इति। तन्मयाप्येवमेव कर्तव्यम्। (इति गगनपथादवतरणं नाटयन्) हन्त! दुरुन्मूलानि खलु देहिनां गाढलग्नानि हृदयशल्यानि।

एतावन्तं समयममृतस्यन्दिनीभिर्महर्षे-
र्वाग्भिः कृच्छ्रादहमगमयं शश्वदाश्वास्यमानः।
धत्ते सख्युर्विरहजनितः सांप्रतं शोकवह्निः
संतापं मे मनसि सुतरामेष लब्धावकाशः ॥ १३ ॥

(निश्वस्य) अहो! अनतिलङ्घ्यता हतविधिविलसितानाम्।

यदभवदयं रक्तस्तस्यां सुहृन्मम सांप्रतं
प्रकृतिसुभगैर्भावैः स्त्रीणां वशीक्रियते न कः।
इदमनुचितं चन्द्रेणास्य स्वशापकृतक्रुधा
झटिति विहितः शापो जन्मद्वये विरहाय यः ॥ १४ ॥

(विचिन्त्य) अथवा इदमेव परमाश्चर्यम् । यदमुनानुस्मृतमहाश्वेतासंबन्धेनामृतकरेण स्वयमपरिक्षतं रक्ष्यते देहान्तरोपयुक्तचैतन्यमपि सुहृच्छरीरम् । (इति परिक्रामन् अभितोऽवलोक्य) कथमधुना शङ्करशरासनस्य गिरेरपरभागादुपागतोऽयमनूरुसारथिः प्रकाशयितुमारभते भारतं वर्षम् ! तथाहि—

कमलवनविकासं कुर्वते चक्रवाकान्
विदधति हृतशोकान् ध्वान्तमुन्मूलयन्ति ।
गगनजलधिवेलाविद्रुमप्रेक्षणीयाः
कतिचिदुदयभाजश्चण्डभानोर्मयूखाः ॥ १५ ॥

(सदृष्टिक्षेपम्) अये ! एष खलु निकषा सुवर्णपुरमुज्जयिनीपतेस्त्रिचतुरदिनवासलब्धदिग्विजयपरिश्रमापहारः स्कन्धावारः । मध्ये चास्य विरचितदिनारम्भनियमश्चन्द्रापीडोऽयमधिवसति पटमण्डपम् ।

आबद्धाञ्जलिभिर्वृतो नृपसुतैरास्थाय भद्रासनं
वारस्त्रीकरचामरानिलचलत्क्षौमोत्तरीयाञ्चलः ।
उत्पश्यन् परिवर्धकेन विधृतं वल्गन्तमिन्द्रायुधं
निःशेषीकृतशत्रुरेष नितरामव्याकुलं वर्तते ॥ १६ ॥

(विचिन्त्य) न खलु सांप्रतमर्थान्तरव्यापृतस्य मे प्रत्यासन्नामपि महाश्वेताम् ‘ ओषधीपतिरुज्जीवयिष्यति ते जीवितेश्वरम् ’ इत्याश्वासयितुम् । अतश्च,

तारापीडसुते रतिं वहतु सा गन्धर्वराजात्मजा
सावज्ञा किल सा स्वयंवरविधौ दिक्पालसूनुष्वपि ।
सख्युः स्रंसयतां च हंसदुहिता भूयोऽपि धैर्यस्थितिं
पश्चाद् द्वे अपि भाविभद्रकथनात् कुर्यां समाश्वासिते ॥१७॥

भवतु, यावदितो नातिदवीयस्यमृतमयेऽस्मिन्नच्छोदसरसि विन्यस्तदेहोऽहमवसरोचितमाचरामि गुरुशासनम् ।

(इति निष्क्रान्तः)

## शुद्धविष्कम्भः ।

---

(नेपथ्ये) **वैतालिकः**—देव, दिष्ट्या वृद्धये भवतु भवतो निर्व्यूढदिग्विजयदीक्षाविधेरयं ग्रैष्मिकी लक्ष्मीः ।

आशां दुष्प्रसहप्रतापमहितौ संप्रस्थितावुत्तरां
त्वं तिग्मद्युतिरप्युदाहृतगुणौ द्वावेव तेजस्विषु ।
कीर्तिर्विद्विषतामुपैति युवयोरेकेन निःशेषता-
मन्येनापि जनस्य जाड्यजननी नीता हिमानी लयम् ॥१८॥

**(ततः प्रविशति यथानिर्दिष्टश्चन्द्रापीडो विदूषकस्ताम्बूल-करण्डवाहिनी च)**

**चन्द्रापीडः**—अहो! विजिगीषैकतत्परतया हि बहुतिथप्रवृत्तोऽपि न संभावितो वसन्तात्ययः। (साशंसम्) संप्रति हि विशेषादुज्जयिन्याम्,

उन्नालाम्बुजषण्डसौख्यसलिला जायेत सिप्रा नदी
स्यात्तस्या नवमल्लिकापरिमलैर्हृद्या तटोद्यानभूः ।
दीव्येयुर्मधुराणि मालववधूवक्त्राणि माध्वीरसैः
किं तद्यन्न भवेदलं रतिपतेः कर्तुं जगज्जैत्रताम् ॥ १९ ॥

**विदूषकः**—वअस्स, ठाणे खु तहिं तहि समए चिरपरिइदो अवंतिविसओ एव्व सुमज्जदी । जदो अहं वि दाणिं दावग्गिदद्धंतरसाहामिअजूहसुलहकोवहस्साइं मिअतिण्हिआणुसारवंचिदवीहत्थमज्झण्हपहिअसत्थदिण्णपरिहासाइं समावासभूदाइं विञ्झाटवीकाननाइं ण पारेमि विसुमरिदुं ।

(छाया—वयस्य, स्थाने खलु तस्मिंस्तस्मिन् समये चिरपरिचितोऽवन्तिविषय एव स्मर्तव्यः । यतोऽहमपीदानीं दावाग्निदग्धान्तरशाखामृगयूथसुलभकोपहास्यानि मृगतृष्णिकानुसारवञ्चितविहस्तमध्याह्नपथिकसार्थदत्तपरिहासानि समावासभूतानिविन्ध्याटवीकाननानि न पारयामि विस्मर्तुम् ।)

**पत्रलेखा**—सरिसो दे एसो अहिणिवेसो आरण्णअत्तणस्स णिक्करुणदाएअ ।

(छाया—सदृशस्ते एषोऽभिनिवेश आरण्यकत्वस्य निष्करुणतायाश्च ।)

**चन्द्रापीडः**—सखे द्रमिडधार्मिक, न खलु सत्यमेव स्मरति भवान् विन्ध्यवनविहारस्य ?

**विदूषकः**—णहि णहि । एव्वं खु मए णिच्चिदं तुह सहित्तणं उपपादेन्तिए विञ्झवणवासिणीए देवीए दंसिओ चिरादो मे पसादोत्ति ।

(छाया—नहि नहि। एवं खलु मया निश्चितं तव सखित्वमुपपादयन्त्या विन्ध्यवनवासिन्या देव्या दर्शितश्चिरान्मे प्रसाद इति।)

(प्रविश्य)

प्रतिहारी (सप्रणामम्)—जेदु जेदु जुवराओ। एसो आसण्णप्पआरी मिअउसेण्णावई णिग्घाअओ विण्णवेइ—दिट्ठं लुद्धएहिं चन्दपहणामस्स पच्छिमोत्तरस्स कइलासपादस्स उपवणमाहिण्डमाणेहिं सद्दूलसिंहवराहगण्डअबअलं आखेडजोग्गं काननं ति।

(छाया—जयतु जयतु युवराजः। एष आसन्नप्रचारी मृगयुसेनापतिर्निर्घातको विज्ञापयति—दृष्टं लुब्धकैः चन्द्रपथनाम्नः पश्चिमोत्तरस्य कैलासपादस्योपवनमाहिण्डमानैः शार्दूलसिंहवराहगण्डकबहलमाखेटयोग्यं काननमिति।)

चन्द्रापीडः (सकौतुकोत्साहम्)—सौदामिनि, ब्रूहि निर्घातकम्—'याहि पुरः, वेष्टय वनं यवनिकाभिः, अयमहमापतित एव' इति।

प्रतिहारी—जं जुवराओ आणवेदि।

(छाया—यद्युवराज आज्ञापयति।)

(इति निष्क्रान्ता)

विदूषकः—हद्धि हद्धि। विरदे वि वरिसे ण पसम्मइ सीअरप्पसरो। जं पज्जवसिए वि चउरन्तरज्जसाहणे इमिणा कुणीअइ पुणोवि वणहरिणवहविणोओ।

(छाया—हा धिक्, हा धिक्। विरतेऽपि वर्षे न प्रशाम्यति शीकर-प्रसरः। यत्पर्यवसितेऽपि चतुरन्तराज्यसाधने अनेन क्रियते पुनरपि वनहरिणवधविनोदः।)

**चन्द्रापीडः**— पत्रलेखे ! मृगयासमायोगमानय ।

**पत्रलेखा**—एदं वणविहरणोवअरणं ।

(छाया—एतत् वनविहरणोपकरणम्।)

**चन्द्रापीडः**— (नाट्येनादाय धारयन्) पत्रलेखे, व्रज त्वमभ्यन्तरम् । एषोऽहमाकृष्टोऽस्मि दिव्यवनमृगयाकौतुकेन ।

**पत्रलेखा**—देवो वि सावअबहुलेसु वणेसु अप्पमत्तो संचरदु ।

(छाया—देवोऽपि श्वापदबहुलेषु वनेषु अप्रमत्तः संचरतु ।)

(इति निष्क्रान्ता)

**चन्द्रापीडः**—सखे, त्वमपि कुतुहली मृगयां विलोकयितुम् ।

**विदूषकः**— विससिअवण्णसंघाए जण्णवाडीए वि पवेसो अपावणत्तणसंकिएहिं अह्माणं पुव्वपुरुसेहिं परिहरिज्जदि । ता कहं उण मए तण्णकवहेण पहूदसूणादोसो एसो पदेसो उवसप्पिउं पारिज्जइ ।

(छाया—विशसितवन्यसंघायां यज्ञवाट्यामपि प्रवेशः अपावनत्वशङ्किभिरस्माकं पूर्वपुरुषैः परिह्रियते। तत् कथं पुनर्मया तर्णकवधेन प्रभूतसूनादोष एष प्रदेश उपसर्पितुं पार्यते ।)

**चन्द्रापीडः**—(विहस्य) एवं परंपरागतमिदं ब्राह्मण्यमनतिक्रमणीयमेव भवतः । (नेपथ्यं प्रति) भद्र धाराधर, सत्वरमुपसर्पयेन्द्रायुधम् ।

(प्रविश्येन्द्रायुधेन सह परिबद्धकशो गृहीताञ्जलिः)

**धाराधरः**—(प्रणम्य) स्वामिन्, अवधार्यताम्; पर्याणितोऽयमौपवाह्यः—

नमितोन्नमिताननेन मूर्ध्ना लिखता भूतलमग्रतः खुरेण ।
मधुरेण च वीक्षितेन हेषामुखरस्त्वामनुमन्यतेऽधिरोढुम् ॥२०॥

(इति दत्वा निष्क्रान्तः)

**चन्द्रापीडः**—(निर्वर्ण्य) कथमयमारूढवर्णान्तरः केनचिदनभिभाव्येन सत्त्वविशेषेणाधिष्ठित इवाभाति ।

**विदूषकः**—भो ण अण्णहा किंवि मण्णिदव्वं । चउरो खु एसो वरतुरआणं उत्थाणसमएसु ।

**(छाया**—भो नान्यथा किमपि मन्तव्यम् । चतुरः खल्वेष वरतुरगाणामुत्थानसमयेषु ।)

**चन्द्रापीडः**—(सस्मरणम्) हन्त ! पारसीकाधिपतिना प्राभृतीकृतमुदधिजलोन्मग्नमिदमश्वरत्नं विद्यानिर्गतस्य मे प्रसादितवता तातेन परं हि वात्सल्यमाविष्कृतम् । अयं हि—

सद्भावात्किमचेतनोऽपि गरुतां बाणो न धावेदिति
त्यक्त्वा तानवतीर्णवान् क्षितितलं किं पक्षिणामग्रणीः ।
वायुर्बाडबसौहृदात्तुरगतां प्राप्तो नु चेतोऽथवा
स्थूलत्वेऽपि लघिष्ठतां प्रथयितुं प्रत्यक्षतामश्नुते ॥ २१ ॥

(नाट्येनारुह्य) सखे, निवेदयतु भवानमात्यवैशम्पायनाय— 'यावदस्मदागमनं सावधानमधिष्ठातव्यः स्कन्धावारः' इति ।

**विदूषकः**—भो जह तुए एव्वं कहिअं तह तक्केमि तुमं तहिं एव्व कअविवाहो सुरघरे वट्टिस्सित्ति ।

(**छाया**—भो यथा त्वया एवं कथितं तथा तर्कयामि त्वं तत्रैव कृतविवाहः सुरगृहे वर्तिष्यस इति ।)

**चन्द्रापीडः**— वयस्य, न खलु नोपपन्नमिदम् । पश्य—

शुभमशुभं वा पुंसः कस्य कदा कुत्र किं नु भवितेति ।
भवितव्यताविलासात् प्रगल्भते क इह निश्चेतुम् ॥ २२ ॥

**विदूषकः**—होदु, अहं दाव अमच्चसविअं उवसप्पामि । तुमं वि तुवरेदु कज्जसिद्धीये ।

(**छाया**—भवतु, अहं तावदमात्यसविधमुपसर्पामि । त्वमपि त्वरस्व कार्यसिद्ध्यै ।)

(इति निष्क्रान्तः)

**चन्द्रापीडः**—(इन्द्रायुधं प्रवर्तयन्) अहो रंहस्विता तुरगवर्यस्य ! यदेतदतिदवीयोऽपि मृगयाकाननं क्षणादेव प्रविष्टोऽस्मि ।

(आकाशे गीयते)—

महिलाओ होन्तु भुवणे जोव्वणलावण्णविब्भमवईओ ।
अण्णारिससोहग्गा तहवि अ काअम्बरी देवी ॥ २३ ॥

(छाया—महिला भवन्तु भुवने यौवनलावण्यविभ्रमवत्यः ।
अन्यादृशसौभाग्या तथापि च कादम्बरी देवी ॥)

**चन्द्रापीडः**—(आकर्ण्य) हृदयंगमो गीतार्थः । किंच,

कादम्बरीति शब्दः संभवदर्थो न वा हृतं हृदयम् ।
अथवा प्रसूनधनुषः कथमारम्भो भवेन्निरालम्बः ॥ २४ ॥

तत्कुतोऽस्य प्रभवः ? (इति परितो वितीर्णदृष्टिरालोक्य, साश्चर्यम्) अये ! किमिदमद्भुताकृति सत्त्वमिथुनमपरोक्ष्यते ? (निरूप्य) नूनमितिहासकथान्तराकर्णितचरं किंनरमिथुनं भवेदेतत् ।

यदिदं नरनिर्विशेषगात्रं मुखमात्रेण तुरङ्गमानुसारि ।
कलगीतनिनादलोभनीयं लभते हन्त न कुत्रचित्प्रतिष्ठाम् ॥२५॥

इतः खलु तस्य ललनारत्नस्य वृत्तान्तः समवगन्तव्यः । यावदिदं जीवग्राहमेव गृह्णामि । (इन्द्रायुधं प्रवर्तयितुमिच्छन्, विभाव्य साश्चर्यम्)—

इन्द्रायुधः स्वयमसावनुधावतीदं
यत्नान्मम प्रथममेव हि कोऽत्र हेतुः ।
ईर्ष्या किमन्यजवजा किमु गीतलोभः
किं जातिसौहृदमथापरमेव किंचित् ॥ २६ ॥

(इति गमनवेगं रूपयित्वा)

ग्रीवामुन्नम्य नूनं प्रपिबति तुरगोऽध्वानमुत्कर्णकोशः
पश्चाद्भागं व्रजन्ति स्वयमिव गिरयस्तत्खुराघातभीत्या ।
मन्ये वन्येयमेका प्रकटयति तरून् यौगपद्यादनेकान्
यत्तत्रैवाग्रभागे स्थित इव वपुषा निश्चलत्वं गतेन ॥ २७ ॥

(पुरोऽवलोक्य)—अये! चित्रमिदं तीव्रवेगस्यापि विप्रकृष्टान्तरमेवाश्वमुखमिथुनमश्वरत्नस्य। इदं हि—

पर्यावर्तितकंधरं मुहुरितो दृष्टिं दधद्व्याकुला-
मन्योन्यं वपुषापवारितवपुः स्नेहेन संरक्षितुम् ।
हस्तग्राह्यमिवावभाति निमिषं भूयो दवीयस्तया
प्रायो लोचनयोरगोचरतरं पन्थानमत्येति च ॥ २८ ॥

(निरूप्य सावेगम्)—हन्त! कथमालोकयत एव मे संमुखीनमचलशिखरमारोहति। (विमृश्य) विकटशिलाकूटकोटिसंकटतया प्रदेशोऽयमविषय एवाश्वचारस्य। (कशां धारयन्) अहो! धिक्, त्रुटितमिवेदानीं मनसि मे कादम्बरीवृत्तान्तकुतूहलाङ्कुरेण। विच्छिन्नश्च दूरतो मृगयुपरिवारः। अन्यदपि कष्टमापतितं यदयमपि ललाटंतपस्तपनः। तथा हि—

संतापं किल सोढुमक्षमतया स्वीयं तरूणामध-
श्छायामण्डलमापिबद्भिरभितो भासां शतैरावृतः ।

व्योम्नश्चक्रधरः स कौस्तुभमणिप्रस्तावमुद्भावय-
न्नह्नो मध्यमसावुपेत्य भगवानिन्धे ग्रहग्रामणीः ॥ २९ ॥

(इन्द्रायुधं विलोक्य) अतीव नन्वयं खिन्नः । क्व पुनराश्वासयाम्येनम् (इति सचिन्तं परितोऽवलोक्य, सहृष्टिक्षेपम्) दृष्टमेव लक्षणमपां निधानस्य । यदत्र—

व्यतिकरितमृणालः शैवलानां प्रवालैः
कुमुदकमलषण्डैः खण्डितार्धैर्विकीर्णः ।
अनतिचिरगतानामेष वन्यद्विपाना-
मभिनवपदमुद्रापङ्किलः कोऽपि पन्थाः ॥ ३० ॥

भवतु, तदनेनैव तमालवीथिकावगाहिना पथा प्रयातव्यम् । (स्तोकमन्तरं गत्वा) लब्धमिदमेकमाह्लादनं करणजातस्य । यतः—

मदकलकलहंसमल्लिकाक्षं विसृमरसौरभहल्लकारविन्दम् ।
शिशिरमधुरनिर्मलाम्बुपूरं किमपि सरो रमणीयमेतदग्रे ॥ ३१ ॥

सखे इन्द्रायुध, अद्य प्रभृति त्वमेवमुन्नेयनिपुणधीवृत्तिरन्य-हयसामान्यमचिन्तनीयोऽसि ।

श्रान्तोऽसि दूरमटवीपथलङ्घनेन
छायाद्रुमेषु भवता व्यपनीय खेदम् ।
स्वैरं विहृत्य सरसि क्रियतां प्रचारो
दूर्वाप्रवालहरितासु तटस्थलीषु ॥ ३२ ॥

यावत् प्रच्छायशीतलेऽस्मिन् स्फटिकसोपानफलकेऽहमपि निषण्णस्तरङ्गमारुतं सेवे । (तथा कृत्वा) हन्त! कान्तारेष्वपि सुलभसमुचितोपबर्हं एव सुकृतिजनः। तथाहि—

आस्तीर्णा पुलिनस्थली वनलतापुष्पैर्मधुस्यन्दिभि-
हंसाः संदधते सुधां श्रवणयोरामञ्जुभिः कूजितैः ।
कल्लोलानिल एष शीतलतरानम्भःकणानाहरन्
पद्मामोदसुगन्धिरातपभुवं श्रान्तिं ममाचामति ॥ ३३ ॥

(इन्द्रायुधं निरूप्य) दिष्ट्यायमापद्यते निजां प्रकृतिम् । (पुनर्निरूप्य) तत्किमयमुत्कर्णनिभृतमौलिरामुकुलितेक्षणः किमप्याकर्णयतीव । (कर्णं दत्वा) आः! कुतस्त्यमिदममानुषेऽस्मिन् वने तन्त्रीझंकारमिलितमतिमनोहरं गीतम्? महानयमवकाशः कुतूहलस्य । (इन्द्रायुधमारुह्य निरूप्य) अनायासमेव हि मयायमनुसरणीयो गीतध्वनिः । यतः,

उद्ग्रीवास्तदभिमुखं वितीर्णकर्णाः
प्रभ्रश्यत्तृणकवलैर्मुखैः प्रयान्तः ।
बाष्पाम्भोविलुलितमीलितेक्षणान्ताः
पन्थानं मम कथयन्त्यमी कुरङ्गाः ॥ ३४ ॥

(परिक्रम्यावलोक्य च) अये! शूलिन इव किमपि शून्यप्रायमेतदायतनम् । (वाहनादवतरन्, दृष्ट्वा) दिष्ट्या धाराधरोऽयमतिजवनतयास्माननुसरन्नागतः । धाराधर, धारय तावदिन्द्रायुधम् ।

(प्रविश्य धाराधरः इन्द्रायुधमादाय निष्क्रान्तः)

चन्द्रापीडः—(अन्तःप्रवेशनाटितकेन) अहो! भगवानयममलमुक्ताशिलाघटितलिङ्गमूर्तिः प्रतिनवहेमारविन्दविरचितार्चनश्चतुर्मुखो देवः। (साञ्जलिबन्धम्, अन्यतो दृष्ट्वा) का पुनरियम्?

शान्तावदातोज्ज्वलमूर्तिरम्या
पतिं पशूनामुपवीणयन्ती।
कृतापराधस्य कृते प्रियस्य
तपश्चरन्तीव रतिर्विभाति॥ ३५॥

अवश्यमचिन्तितान्यपि दैववशादापतन्ति वृत्तान्तराणि जन्मवताम्। तथाहि—

क्व मृगया क्व तुरङ्गमुखद्वयं
क्व नु वयं क्व च दिव्यमिदं सरः।
क्व खलु गीतमियं क्व च शोभना
घटयितुं यतते किमहो विधिः॥ ३६॥

रूपयौवनयोरस्या नानुरूपमिदं तपः।
(विमृश्य)
अथामङ्गलमेतस्या न किंचिदपि दृश्यते॥ ३७॥

तदियमागीतपरिसमाप्ति निभृतमनुपालितवता मयानुयोक्तव्या।

(तथा तिष्ठति)

(ततः प्रविशति यथानिर्दिष्टा महाश्वेता)

**महाश्वेता**—(गायति)

तं एव्व चन्द्रसेहर करेहि अइरा जणे इमस्सं वि ।
जेण पसाएण रई पुणोवि दइएण समं लग्गा ॥ ३८ ॥

(**छाया**—तमेव चन्द्रशेखर कुर्वचिराज्जनेऽस्मिन्नपि ।
येन प्रसादेन रतिः पुनरपि दयितेन समं लग्ना ॥)

**चन्द्रापीडः**—(सचमत्कारम्) अहो! निरवद्यता संगीतविद्यायाः—

स्पृशतु सरणीरालापानां सुधारसमाधुरी
गमकलहरी चेयं यातु स्वरीतिषु चातुरीम् ।
दधतु यदि च व्यक्तिं मात्राः स्फुरन्तु च मूर्च्छनाः
क्व पुनरिदं तन्त्रीकण्ठोत्थितस्वरमेलनम् ॥ ३९ ॥

**महाश्वेता**—(वीणां पुरतो निवेश्यात्मगतम्) अम्हो! को एसो सोम्मगम्भीराकिदी विणओ विअ धरिअविग्गहो महाभाओ ।

(**छाया**—अहो! क एष सौम्यगम्भीराकृतिर्विनय इव धृतविग्रहो महाभागः ?)

**चन्द्रापीडः**—(साञ्जलिबन्धम्) भगवति, भारतवर्षाधिपतेस्तारापीडस्य सूनुश्चन्द्रापीडोऽभिवादयते ।

**महाश्वेता**—(स्वगतम्) कहं एसो सो मज्झमलोअराअउत्तो, जस्स रूवकल्लाणविण्णाणविक्कमाओ तादस्स पुरदो वण्णीअदि चारणमिहुणाइं । (प्रकाशम्) णिव्विग्घमणोरहो होहि ।

(छाया—कथमेष स मध्यमलोकराजपुत्रः यस्य रूपकल्याणविज्ञान-विक्रमाः तातस्य पुरतो वर्ण्यन्ते चारणमिथुनैः। निर्विघ्नमनोरथो भव।)

(उत्थाय यथार्हमातिथ्यमाचरति)

चन्द्रापीडः—(स्वगतम्) अयं नामानुभवस्तपसाम्।

पुष्पं फलं च वितरन्ति हि यत्र योग्य-
मावर्जिताग्रविटपाः स्वयमेव वृक्षाः।
अम्बूनि पद्मदलसंपुटसंभृतानि
यच्छन्त्यदृश्यवपुषो जलदेवताश्च ॥ ४० ॥

(प्रकाशम्) आर्ये, अनुग्रहमात्रप्रत्यवेक्षिणि जने कृतमनयाति-यन्त्रणया।

महाश्वेता—महाभाअ, कुदो उण कालणादो इमो सणाहीकओ देसो?

(छाया—महाभाग, कुतः पुनः कारणात् अयं सनाथीकृतो देशः?)

चन्द्रापीडः—(यथावदावेदयति)

महाश्वेता—किं बहुणा? उवकअं किंणरमिहुणेण अह्माणं।

(छाया—किं बहुना? उपकृतं किंनरमिथुनेनास्माकम्।)

चन्द्रापीडः—(स्वगतम्) मयापि खलु वेदितव्योऽस्या वृत्तान्तः। मन्ये समयोऽयमेवानुयोगस्य। अथेदमौपयिकं न वेति द्वैधीभावेन शालीनतैव मामतितरामाकुलयति। (इति महाश्वेतां पश्यति)

**महाश्वेता**—(निरूप्य) महाभाअ, अलं। आरूढसोहदम्मि। विजणे अ वीसह्मेण पुच्छीयदु दाव। लक्खिदोसि गिरिसाराहअत्तणेण। किं मन्दभाअणीए मह वि पउत्तिं पुच्छिदुं इच्छसि?

(**छाया**—महाभाग, अलम्। आरूढसौहृदास्मि। विजने च विस्रम्भेण पृच्छयतां तावत्। लक्षितोऽसि गिरीशाराधकत्वेन। किं मन्दभाग्याया ममापि प्रवृत्तिं प्रष्टुमिच्छसि?)

**चन्द्रापीडः**—(स्वगतम्) स्थाने महदिङ्गितज्ञानचातुर्यमार्यायाः। (प्रकाशम्) सत्यमेवमेव।

**महाश्वेता**—(सनिश्वासम्) किं ति दुक्खसहस्ससंपाददुस्सहाए अत्तणो कहाए मिलावेमि कुसुमसुउमारं महाभाअस्स हिअअं।

(**छाया**—किमिति दुःखसहस्रसंपातदुःसहया आत्मनः कथया ग्लापयामि कुसुमसुकुमारं महाभागस्य हृदयम्।)

(इति बाष्पं विमुञ्चति।)

चन्द्रापीडः—(स्वगतम्) नूनमभिमतवियोगमूलेन भवितव्यममुनाभिषङ्गेण। इयं हि—

बाष्पैर्लोचनशुक्तिगर्भनिभृतैर्मुक्ताफलाभैः क्षणं
स्थूलस्थूलनिबद्धबिन्दु परितः पक्ष्माग्रसंपिण्डितैः।
धारालैरनुगण्डभित्ति गलितैः संव्यानमासिञ्चती
कृच्छ्रोत्पीडितकण्ठगद्गदरवा पर्याकुलं रोदिति ॥४१॥

(प्रकाशम्) आर्ये, व्यतीतव्यसनशल्योद्धाटनेनामुना कृतागसमात्मानं मन्ये।

**महाश्वेता**—(वल्कलाञ्चलेन नयने प्रमृज्य) महाभाअ, तह ण वत्तव्वं। णं सहिअणणिवेइओ दुक्खभरो संविभन्तो विअ लहू होइ। अवधारेहि दाव।

(छाया—महाभाग, तथा न वक्तव्यम्। ननु सखिजननिवेदितो दुःखभरः संविभक्त इव लघुर्भवति। अवधारय तावत्।)

**चन्द्रापीडः**—आज्ञापयतु भवती।

**महाश्वेता**—अत्थि बहु वत्तव्वं। पसंगो एसो पच्चा लद्धवी-समेण महाभाएण वित्थरदो सोदव्वो। दाणीं च लहु आचक्खेमि।

(छाया—अस्ति बहु वक्तव्यम्। प्रसङ्ग एष पश्चाल्लब्धविश्रमेण महा-भागेन विस्तरात् श्रोतव्यः। इदानीं च लघु आचक्षे।)

**चन्द्रापीडः**—प्रथमः कल्पः।

**महाश्वेता**—सुवइ खु किंपुरुसवरिससासी साहीणसव्व-गन्धव्वसेणो महेन्दसहअरो चित्तरहो।

(छाया—श्रूयते खलु किंपुरुषवर्षशासी स्वाधीनसर्वगन्धर्वसेनो महेन्द्र-सहचरश्चित्ररथः।)

**चन्द्रापीडः**—जगत्प्रकाशमेतत्।

**महाश्वेता**—तस्स कणिट्ठभादूणो हंसस्स णन्दिणी अहं महासेदा णाम मन्दभाइणी।

(छाया—तस्य कनिष्ठभ्रातुर्हंसस्य नन्दिन्यहं महाश्वेता नाम मन्द-भागिनी।)

**चन्द्रापीडः**—अहो ! द्वितीयगन्धर्वराजपुत्रीत्यपर्याप्तिराभिजात्यस्य ।

**महाश्वेता**—तादिसीए मह अलक्खणाया कए अविलक्खेण णिक्कलुणेण मअणेण तादिसं अकहणिज्जं किंवि दसन्तरं उवणीओ सुगहीदणामा दिव्वेसिकुमालो णाहपुण्डरीओ ।

(छाया—तादृश्या मम अलक्षणायाः कृते अविलक्षेण निष्करुणेन मदनेन तादृशमकथनीयं किमपि दशान्तरमुपनीतः सुगृहीतनामा दिव्यर्षिकुमारो नाथपुण्डरीकः ।)

**चन्द्रापीडः**—(स्वगतम्) स्थाने प्रसन्नोऽस्मि ।

**महाश्वेता**—तस्स अज्ज चिरकालणमुद्दिसिअ केण वि दिव्वपुरिसेण लोअन्तरं गमिअस्स जावसमाअमं एत्थ अच्छोदस्स परिसरे तवच्चरणमेत्तेण अकलुणा हअसरीरं परिवत्तयन्ती वट्टामि ।

(छाया—तस्याद्य चिरकारणमुद्दिश्य केनापि दिव्यपुरुषेण लोकान्तरं गमितस्य यावत्समागममत्राच्छोदस्य परिसरे तपश्चरणमात्रेणाकरुणा हतशरीरं परिवर्तयन्ती वर्ते ।)

(इति रोदिति)

**चन्द्रापीडः**—(स्वगतम्) दुर्निवाराः खलु विपदुपनिपाता नियतमाकृतिविशेषेष्वपि । (प्रकाशम्) आर्ये,

कालान्तरितानि यथा हृदयं दलयन्ति चिन्त्यमानानि ।
दुःखानि देहभाजां नायान्ति तथानुभूयमानानि ॥ ४२ ॥

तत्कृतं शुचा विदितवेदितव्याया भवत्याः ।

**महाश्वेता**—ण आणे किंचिरं एदं णिच्चलहअसरीरधारणं करीअदित्ति।

(**छाया**—न जाने कियच्चिरमेतत् निश्चलहतशरीरधारणं क्रियतामिति।)

**चन्द्रापीडः**—नैराश्यमुन्मुच्य बधान धैर्यं
संजीवय त्वं दयितं दयालुः।
उज्जीवितः किं हरिणा न सूनुः
सांदीपिनेः संयमनीं गतोऽपि॥ ४३॥

**महाश्वेता**—(कथंचिच्छोकावेगं संस्थापयन्ती कर्णं दत्त्वा) कहं पदसद्दो विअ। णूणं हेमऊडादो पडिणिवुत्ताए होदव्वं तरलिआए। (दृष्ट्वा) कहं इमं अणुगओ कण्णअन्तेउराहिकओ केऊरओ वि।

(**छाया**—कथं पदशब्द इव। नूनं हेमकूटात् प्रतिनिवृत्तया भवितव्यं तरलिकया। कथमिमामनुगतः कन्यान्तःपुराधिकृतः केयूरकोऽपि।)

**चन्द्रापीडः**—आर्ये, कैषा तरलिका नाम?

**महाश्वेता**—सा खु मे सअलदुक्खेकसक्खिणी सहअरी।

(**छाया**—सा खलु मे सकलदुःखैकसाक्षिणी सहचरी।)

**(प्रविष्टा तरलिका केयूरकश्च)**

**तरलिका**—अम्हो! को एसो जअन्तनलकूअरादिसइअसोंदरो महाभाओ?

(छाया—अहो! क एष जयन्तनलकूबरातिशयितसौन्दर्यो महाभागः?)

**केयूरकः—**

ताद्दशरूपातिशयां देवीं कमलासनेन सृष्टवता ।
सृष्टोऽयमीद्दशाकृतिविशेष इति युक्तमेवैतत् ॥ ४४ ॥

**तरलिका**—ण खु इमं जाणामि अहं । सहीए उण चिरपरिइओ विअ सिणेहकारुण्णणिब्भराए दिट्ठीए अणुगिण्हीअदि ।

(छाया—न खल्विमं जानाम्यहम् । सख्या पुनश्चिरपरिचित इव स्नेहकारुण्यनिर्भरया दृष्ट्या अनुगृह्यते ।)

**केयूरकः**—प्रायः स एव भवेदयं भारतवर्षराजसूनुः, यो दिग्विजयागतो मृगयाप्रसङ्गसंनिहितः किंनरमिथुनेन चैत्ररथं प्रापित इति दूतमुखात् गन्धर्वराजमहिष्या मदिरयोपांशु मे कथितम् ।

**तरलिका**—(सस्मितम्) ठाणे रमणिज्जसंविहाणअं एदं ।

(छाया—स्थाने रमणीयसंविधानकमेतत् ।)

(उभावुपसर्पतः ।)

**केयूरकः**—विजयतां स्वामिनी ।

**तरलिका**—जेदु भट्टिदारिआ ।

(छाया—जयतु भर्तृदारिका ।)

**महाश्वेता**—तरलिए, कच्चिअब्भुवगअह्मवअणा पिअसही काअम्बरी ?

(छाया—तरलिके, कच्चिदभ्युपगतास्मद्वचना प्रियसखी कादम्बरी ?)

**चन्द्रापीडः**—(स्वगतम्) अपि नामेयं सैव कादम्बरी स्यात्?

श्रुतया श्रवो यया मे हृष्यति लोचनमदृष्टया व्यथते ।
रत्या तु मध्यगोचरमिदं च डोलायते चेतः ॥ ४५ ॥

**तरलिका**—जं जह सहीए संदिट्ठं तं तह सव्वं मए विण्णविदं। देवीए उण मदवीमहेण पेक्खिअ आसीणाए चिरं रोतूण इमस्स अय्यकेऊरअस्स मुहे किंवि पडिसंदिट्ठं। तं सो एव्व णिवेअइउं अरुहदि भट्टिदारिआए।

(छाया—यत् यथा सख्या संदिष्टं तत् तथा सर्वं मया विज्ञापितम्। देव्या पुनः मदविस्मयेन प्रेक्ष्यासीनया चिरं रुदित्वा अस्यार्यकेयूरकस्य मुखे किमपि प्रतिसंदिष्टम्। तत् स एव निवेदयितुमर्हति भर्तृदारिकायै।

**महाश्वेता**—अय्य, कहेहि दाव।

(छाया—आर्य, कथय तावत्।)

**केयूरकः**—एवं विज्ञापयति भर्तृदारिका देवीम्। यन्मे प्रियसख्या संदिष्टं तदहं गृहनिवासापराधिनी निपुणमुपालब्धास्मि। किं बहुना—

मम प्राणेषु चेदास्था मा भूद्बुद्धिरियं तव ।
त्यज्यते न प्रतिज्ञेयं मया सख्येन ते शपे ॥ ४६ ॥

**महाश्वेता**—महन्तो खु अहिणिवेसो इमस्सिं दुरग्गहे पिअसहीए। सव्वहा अहं एव्व मन्दभाआ पुणो पुणो सव्वस्स वि गन्धव्वकुलस्स दुक्खकारिणी संवुत्तह्मि।

(छाया—महान् खल्वभिनिवेशोऽस्मिन् दुराग्रहे प्रियसख्याः । सर्वथाहमेव मन्दभाग्या पुनः पुनः सर्वस्यापि गन्धर्वकुलस्य दुःखकारिणी संवृत्तास्मि ।)

**चन्द्रापीडः**—(स्वगतम्) एवमरुंतुदमस्याः किं तया प्रतिज्ञातं स्यात्? भवतु, अवसरे पृच्छामि ।

**केयूरकः**—(स्वगतम्) यावदस्यै महादेव्या मदिरया प्रेषितमर्थं निवेदयामि (इति महाश्वेतायाः कर्णे 'एवम्' इति कथयति) ।

**महाश्वेता**—(स्वगतम्) ठाणे खु अम्बाए उवलद्धा इमस्स आणयने पओअणसिद्धी । इमं एव्व पदंसिअ सिडिलिअव्वो सहीए पडिण्णागन्थित्ति अज्जवसिदम् । केऊरअ, चिरं चन्देवि उग्गए कुमुलिणी ण मुञ्चेइ ण मुउलमुद्दाबन्धणम् । (प्रकाशम्) अय्य केऊरअ, अज्ज दाव परिणओ दिअहो । सुवे अहं एव्व आगमिअ अवणेमि से दुरग्गहं एदं । तुमं दाव पुरदो गदुअ जाणावेहि अह्मआगमणं सहीए ।

(छाया—स्थाने खलु अम्बयोपलब्धा अस्यानयने प्रयोजनसिद्धिः । इममेव प्रदर्श्य शिथिलयितव्यः सख्याः प्रतिज्ञाग्रन्थिरित्यध्यवसितम् । केयूरक, चिरं चन्द्रेऽप्युद्गते कुमुदिनी न मुञ्चति न मुकुलमुद्राबन्धनम् । आर्य केयूरक, अद्य तावत्परिणतो दिवसः । श्वोऽहमेवागम्य अपनयाम्यस्या दुराग्रहमेतम् । त्वं तावत्पुरतो गत्वा विज्ञापयास्मदागमनं सख्यै ।)

**केयूरकः**—यदाज्ञापयत्यार्या (इति निष्क्रान्तः)

**चन्द्रापीडः**—आर्ये, कैषा कादम्बरी नाम?

**महाश्वेता**—जो सो चित्तरहोत्ति गन्धव्वराओ तस्स दुइआ काअम्बरी। 'मइ एव्वं दुक्खिआए सअंवि पाणिग्गहं ण संभावेमि'त्ति कअपडिण्णा आआसेइ दं गन्धव्वराअउलं।

(छाया—यः स चित्ररथ इति गन्धर्वराजः, तस्य दुहिता कादम्बरी। 'मयि एवं दुःखितायां स्वयमपि पाणिग्रहं न संभावयामि' इति कृतप्रतिज्ञा आयासयतीदं गन्धर्वराजकुलम्।)

**चन्द्रापीडः**—अत्याहितमिदम्। अथवा समुचितमिदं सौहार्दस्य।

क्षणसंस्तुतोऽपि लोकस्तव समवस्थां विलोकयन् व्यथते।
किमु सहपांसुक्रीडादुर्ललितः प्रियसखीवर्गः॥ ४७॥

**महाश्वेता**—ता कुमालो वि पहादे मए समं काअम्बरीं पेक्खिदुं अरुहदित्ति अब्भत्थइदुं अहिलसामि।

(छाया—तत्कुमारोऽपि प्रभाते मया समं कादम्बरीं प्रेक्षितुमर्हतीति अभ्यर्थयितुमभिलषामि।)

**चन्द्रापीडः**—(आत्मगतम्)

कादम्बरीति यस्या नामैव निशम्य विक्लबं हृदयम्।
संदर्शनेन तस्याः कथं नु भवितेति नावगच्छामि॥ ४८॥

(प्रकाशम्) आर्ये, अनुयोक्तव्यस्त्वदाज्ञानुवर्ती जनः।

**तरलिका**—सरिसं महाणुभवदाए। सहि दंसेहि दाव जुवराअस्स वीसमपअं। करेहि सव्वं संविहाणअं। (चन्द्रापीडं प्रति) इदो इदो महाभाओ।

(छाया—सदृशं महानुभावतायाः। सखि, दर्शय तावत् युवराजस्य विश्रमपदम्। कुरु च सर्वं संविधानकम्। इत इतो महाभागः।)

चन्द्रापीडः—(उत्थाय समन्तादवलोकयन्)

अयमुपचितरागः पद्मिनीं वासरश्री-
प्रणयसमधिगम्यां प्राप्तुमुत्कण्ठमानः।
मृदिततिमिरबन्धां वारुणीं सेवमानः
प्रविशति दिननाथः कन्दरां मन्दराद्रेः ॥॥ ४९ ॥

(इति निष्क्रान्ताः सर्वे।)

प्रथमोऽङ्कः ॥



# द्वितीयोऽङ्कः ।

---

(ततः प्रविशति तरलिकयोपदिश्यमानवर्त्मा चन्द्रापीडो महाश्वेता च)

चन्द्रापीडः—( परिक्रामन् आत्मगतम् )—

पन्थास्तथैव रात्रौ यथा गतायामलोकयं स्वप्ने ।
यदि सापि दिव्यकन्या स्यादेवं धन्य एवाहम् ॥ १ ॥

( प्रकाशम् ) आर्ये, कच्चिदयमेव काञ्चनमयः शैलो हेमकूटः ?

महाश्वेता—अय्य अहइं ।

(छाया—आर्य, अथ किम् ।)

तरलिका—एदं च से अहिच्चआइं गन्धव्वराअणअरं।

(छाया—एतच्चास्याधित्यकायां गन्धर्वराजनगरम् ।)

चन्द्रापीडः—अहो! अनन्यसाधारणं हि रामणीयकं चित्ररथराजधान्याः ।

उद्यानान्यखिलर्तुसंभृतममून्याबिभ्रते विभ्रमं
व्याकोचैः कनकाम्बुजैर्विदधते नेत्रोत्सवं दीर्घिकाः ।
मूर्च्छद्ग्रामविशेषमुच्छ्वसिति यत्सौधेषु संगीतकं
निर्व्याजोज्ज्वल एष दीव्यति सुखं सर्वत्र सर्वो जनः॥२॥

महाश्वेता—एदं देवीए कादम्बरीए भवणं ।

(छाया—एतत् देव्याः कादम्बर्या भवनम् ।)

चन्द्रापीडः—अये कमनीयता कन्यान्तःपुरस्य । इह हि—

अभ्रादापततीव सिद्धतटिनी शुभ्रैः पताकापटै-
रुड्डीना इव दिक्षु तोरणमणिच्छायाचयैर्बर्हिणः ।
आकीर्णा इव तारकास्तत इतः पुष्पोपहारैर्नवैः
संनद्धा इव सर्वतो जलधरा धूपैर्गवाक्षोद्गतैः ॥ ३ ॥

तरलिका—एदं कण्णअन्तेउरदुवारं ।

(छाया—एतत्कन्यान्तःपुरद्वारम् ।)

महाश्वेता—पविसदु महाभाओ ।

(छाया—प्रविशतु महाभागः ।)

चन्द्रापीडः—(स्वगतम्) न खलु ममानया कल्याणशीलया सोपग्रहं नीयमानस्य न शस्यते कन्यान्तःपुरप्रवेशः ।

(सर्वे प्रवेशं नाटयन्ति)

महाश्वेता—जुवराअ इदो इदो देवीपरिअणस्स समुइअणिएसणिव्वहणणेउणं णिरूवेइ ।

(छाया—युवराज, इत इतो देवीपरिजनस्य समुचितनिदेशनिर्वहणनैपुणं निरूपय ।)

चन्द्रापीडः—ननु पश्यामि—

सोत्कम्पस्तनमेकया नखमुखैराहन्यते वल्लकी
पश्याम्यत्र कयापि पञ्जरशुकः स्निग्धस्वरं पाठ्यते।
कामश्चित्रपटेऽन्ययातिचतुरं रत्या समं लिख्यते
तालैः शिञ्जितकङ्कणैरपरयाप्यानर्त्यते बर्हिणः ॥ ४ ॥

किंच,

विभ्रमचलितैर्नेत्रैर्हस्तैर्हारैः पयोधरैः सुदृशाम्।
कुवलयितं किसलयितं तारकितं स्तबकितं च गगनतलम्॥५

(सर्वे परिक्रामन्ति)

**तरलिका**—(नेपथ्यं प्रति) हला, कहेह। कहिं देवी? किं वा अणुचिट्ठइ? किं भणह—सिरिमण्डपंमि गन्धव्वकण्णआहिणिज्जंतं किं वि पेक्खणअं परिक्खन्ती वट्टइत्ति।

(छाया—हला, कथयत। कुत्र देवी? किं वा अनुतिष्ठति? किं भणत—श्रीमण्डपे गन्धर्वकन्यकाभिनीयमानं किमपि प्रेक्षणकं परीक्षमाणा वर्तत इति।)

**महाश्वेता**—(स्वगतम्) णूणं तं एव्व भवे जं पिअसहीए कअं कव्वबन्धचरिअं मे मन्दभाआए।

(छाया—नूनं तदेव भवेत् यत् प्रियसख्या कृतं काव्यबन्धचरितं मम मन्दभाग्यायाः।)

**चन्द्रापीडः**—(हस्तेन निर्दिशन्)

आमुक्तमौक्तिकवितानमिदं नु देव्याः
श्रीमण्डपं यदुपसर्पणमार्ग एषः।

पार्श्वद्वयस्थितवधूमणिभूषणांशु-
पूरेण नाव्य इव नः पुरतो विभाति ॥ ६ ॥

**महाश्वेता**—(वातायने दत्तदृष्टिः कादम्बरीं दृष्ट्वा) महाभाअ इदो गवक्खमग्गम्मि दिट्ठिं पसारेहि ।

(**छाया—महाभाग, इतो गवाक्षमार्गे दृष्टिं प्रसारय ।**)

**चन्द्रापीडः**—(तथा कृत्वा, स्वगतम्)

सा नूनं स्यादियं यस्या गतायाः कर्णगोचरम् ।
अनवद्यमिदं रूपमवभात्येवमेव मे ॥ ७ ॥

(प्रकाशम्)

कास्विदियमम्बुजमुखी सखीभिरात्मानुरूपवेषाभिः ।
निधिदेवताभिरभितो वृतेव संलक्ष्यते लक्ष्मीः ॥ ८ ॥

अस्याश्च,

आपूर्णेन्दुसमं मुखं कुवलयस्निग्धाभिरामे दृशौ
बाहू बालमृणालकोमलरुचौ कुम्भानुकारौ कुचौ ।
मध्यो मन्मथचापवत्तनुतरः श्रोणी रथाङ्गोपमा
पादौ पल्लवपाटलौ किमपरं छायेयमन्यादृशी ॥ ९ ॥

**महाश्वेता**—एसा सा रअणदीवो गन्धव्वकुलस्स, पडिच्छन्दो रदीए, सही अणङ्गस्स, महिलाणिम्माणणेउणावही कमलासणस्स पिअसही मे काअम्बरी ।

(**छाया—एषा सा रत्नदीपो गन्धर्वकुलस्य, प्रतिच्छन्दो रत्याः, सखी अनङ्गस्य, महिलानिर्माणनैपुणावधिः कमलासनस्य प्रियसखी मे कादम्बरी ।**)

**चन्द्रापीडः**—कथमियं सा चैत्ररथी ! (स्वगतम्)—

भृङ्गानङ्गुलिभिर्मुखान्तिकचरानुत्सारयन्ती मुहु-
र्विस्रस्तां श्रवणावतंसकलिकामासञ्जयन्ती शनैः ।
आलिं सस्मितमात्तनर्मवचनां लीलाम्बुजेन घ्नती
सेयं पुङ्खितसायकं वितनुते पुष्पायुधं विभ्रमैः ॥ १० ॥

**महाश्वेता**—तरलिए गच्छ णिवेदेहि देवीए जुवराअस्स पुडमावलोअणमहब्भुदयं ।

(छाया—तरलिके, गच्छ निवेदय देव्यै युवराजस्य प्रथमावलोकनमहाभ्युदयम् ।)

**तरलिका**—तह करेमि (इति गत्वा निरूप्य च) जं एसा किं वि केऊरएण विण्णविज्जदि, ता णूणं दाणिं इमिणा करीअदि जुवराअवण्णणं एव्व । जाव से अहं वि पिअणिवेदइत्तिआ होम्मि । (उपसर्पति)

(छाया—तथा करोमि । यदेषा किमपि केयूरकेण विज्ञाप्यते, तन्नूनमिदानीमनेन क्रियते युवराजवर्णनमेव । यावदस्या अहमपि प्रियनिवेदयित्री भवामि ।)

(ततः प्रविशति यथानिर्दिष्टपरिवारा कादम्बरी सख्यौ केयूरकश्च)

**कादम्बरी**—(स्वगतम्) कहं से राअउत्तस्स 'ईरिसो तारिसो'त्ति रूवसोहग्गगुणवण्णणेणेव्व अण्णारिसं मे हिअअं (प्रकाशम्, केयूरकं प्रति) अवि णाम सो पिअसहीए एद्धवि उवाणिज्जइ ।

(छाया—कथमस्य राजपुत्रस्य 'ईदृशस्तादृशः' इति रूपसौभाग्यगुण-वर्णनेनैवान्यादृशं मे हृदयम्। अपि नाम स प्रियसख्यात्राप्युपानीयते।)

**केयूरकः**—कोऽत्र संशयः ?

निजं पदं भाग्यवशादुपेयुषः
प्रियैकयोग्यस्य नृपात्मजस्य सा।
अदर्शयन्ती भवतीमथेतरत्
किमस्य संभावनमाचरिष्यति ॥ ११ ॥

**सख्यौ**—भट्टिदारिए कहं वा तुमं तारिसेण णअणुच्चवेण वञ्चेदि अज्जा।

(छाया—भर्तृदारिके कथं वा त्वां तादृशेन नयनोत्सवेन वञ्चयत्यार्या।

**केयूरकः**—(स्वगतम्)

साकल्यतो न शक्यं तस्य मया रूपवर्णनं कर्तुम्।
अस्यास्तथापि मनसि स्फुरितैव चमत्क्रिया सुतराम् ॥ १२ ॥

**तरलिका**—(उपसृत्य) जेदु देवी।

(छाया—जयतु देवी।)

**कादम्बरी**—(ससंभ्रमम्) अवि आसण्णदंसणा पिअसही ?

(छाया—अप्यासन्नदर्शना प्रियसखी ?)

**तरलिका**—एसा पडिहारं उवगआ।

(छाया—एषा प्रतिहारमुपगता।)

**सख्यौ**—णं तेण समं राअउत्तेण?

(**छाया**—ननु तेन समं राजपुत्रेण?)

**तरलिका**—तमालिए, तं एव्व उवट्ठिदं देवीए णिवेदुं अग्गदो आगदम्हि।

(**छाया**—तमालिके, तमेवोपस्थितं देव्यै निवेदयितुमग्रत आगतास्मि।

**तमालिका**—मअलेहे, ईरिसो अज्जाए सहीसिणेहो।

(**छाया**—मदलेखे, ईदृश आर्याया: सखीस्नेहः।)

**कादम्बरी**—(सासूयमिव) कीरिसो?

(**छाया**—कीदृशः?)

**तमालिका**—(सस्मितम्) जं अकअपुव्वेण एव्वं अस्समपदादो आअमणेण दंसेइ सोहद्दं। तदो भणामि।

(**छाया**—यदकृतपूर्वेणैवमाश्रमपदाद्रागमनेन दर्शितं सौहार्दम्। ततो भणामि।)

**कादम्बरी**—(स्वगतम्) अम्हो! छेअप्पलावपेसलदा वि सिक्खिदा तमालिआए। (प्रकाशम्) केऊरअ, णिवेदेहि तुमं गुरुअणस्स अज्जाए आगअंति।

(**छाया**—अहो छेकप्रलापपेशलतापि शिक्षिता तमालिकया। केयूरक, निवेदय त्वं गुरुजनाय आर्ययागतमिति।)

**केयूरकः**—(स्वगतम्) ननु मयापि चन्द्रापीडोपगमनं महादेव्यै निवेदयितव्यम्। (प्रकाशम्) यदादिशति देवी।

(इति निष्क्रान्तः)।

**कादम्बरी**— जाव एनं पच्चुग्गमिस्सं। (उत्थाय परिक्रामन्ती नेपथ्यं प्रति) लासिआओ मुञ्चह संगीदव्वावारं।

(छाया—यावदेनां प्रत्युद्गमिष्यामि। लासिकाः, मुञ्चत संगीत-व्यापारम्।)

**सख्यौ**—इदो इदो देवी।

(छाया—इत इतो देवी।)

**परिजनः**—भट्टिदारिए, एसो छड्ढचामरधारिणीओ।

(छाया—भर्तृदारिके, एताः छत्रचामरधारिण्यः।)

**मदलेखा**—इदो इदो देवी।

(छाया—इत इतो देवी।)

**कादम्बरी**—(स्वगतम्) अम्हो खण्डिअं विअ से महा-भाअस्स दंसणासाए धावइ मे अङ्गदो हिअअं। (परिक्रामति)।

(छाया—अहो खण्डितमिवास्य महाभागस्य दर्शनाशया धावति मेऽङ्गात् हृदयम्।)

**चन्द्रापीडः**—अये रूपाभिजनानुरूपोऽयमादरविशेषोऽस्याः।

तथाहि—

एकेनांसविलम्बिनीं कवरिकामुद्ग्रथ्नती पाणिना
बिभ्राणा श्लथमुत्तरीयमपरेणासज्ज्य वक्षोजयोः।

तन्वी संभ्रममुक्तमन्दगमना भूमौ स्खलन्ती मुहुः
प्रत्याख्यातपरिच्छदेयमितरेवाभ्येति कादम्बरी ॥१३॥

**महाश्वेता**—कहं सअं एव्व सही अभिमुहं अह्माणं आअच्छइ ।

**(छाया—कथं स्वयमेव सखी अभिमुखमस्माकमागच्छति ।)**

**कादम्बरी**—(उपेत्य महाश्वेतायाः पादयोः प्रणमति । उभे अन्योन्यमालिङ्गतः ।)

**चन्द्रापीडः**—( सरोमाञ्चमात्मगतम् )

परिरब्धुमङ्गमस्याः किमकृत सुकृतं सखी महाश्वेता ।
आलोकितेऽपि यस्मिन्नुन्मिषति ममैवमाह्लादः ॥ १४ ॥

**तमालिका**—(अपवार्य) मअलेहे, सरिसो खु एसो दइओ पिअसहीए ।

**(छाया—मदलेखे, सदृशः खल्वेष दयितः प्रियसख्याः ।)**

**मदलेखा**—(अपवार्य) तदा खु सोहणं भवे सव्वं, जइ णिवट्टइ एसा तदो पडिण्णादुराग्गहादो ।

**(छाया—तदा खलु शोभनं भवेत् सर्वं, यदि निवर्तेत एषा ततः प्रतिज्ञादुराग्रहात् ।)**

**महाश्वेता**—(सबहुमानं चन्द्रापीडं प्रदर्शयन्ती) सहि काअम्बरि, एसो भारदवरिसराअउत्तो भुअबलवसीकआसेसभूमण्डलो मिअआप्पसंगेण अह्माणं णअणपुण्णचन्दत्तणं उवगओ । ता इमस्सिं तुए सविसेसं सहिअआए होदव्वं ।

(छाया—सखि कादम्बरि, एष भारतवर्षराजपुत्रो भुजबलवशीकृताशेषभूमण्डलो मृगयाप्रसङ्गेनास्माकं नयनपूर्णचन्द्रतामुपगतः। तदस्मिन् त्वया सविशेषं सहृदयया भवितव्यम्।)

**कादम्बरी**—(स्वगतम्) का अहं अत्तणो? इमस्स दंसणेणेव्व सव्वस्सिं अणीसह्मि।

(छाया—काहमात्मनः? अस्य दर्शनेनैव सर्वस्मिन्ननीशास्मि।)

**तमालिका**—भट्टिदारिए, अवि सुदं अज्जाए वअणं? तह संभावेहि राअउत्तं।

(छाया—भर्तृदारिके, अपिश्रुतमार्याया वचनम्? तथा संभावय राजपुत्रम्।)

**कादम्बरी**—कहं?

(छाया—कथम्?)

**तमालिका**—जह अय्याए पिअं होइ।

(छाया—यथार्यायाः प्रियं भवेत्।)

**कादम्बरी**—णाहं सक्कुणोमि दे पोढअत्तणमवगमिदुं।

छाया—नाहं शक्नोमि ते प्रौढतामवगन्तुम्।

**चन्द्रापीडः**—(कादम्बरीं निर्वर्ण्य स्वगतम्) अस्याः खलु,

आरब्धं द्रुतचङ्क्रमं न सहते नव्या नितम्बोन्नति-
विस्मृत्य स्मरतीव दृष्टिरचिराभ्यस्तानरालक्रमान्।
पर्यायेण गतागतानि कुरुते वाङ् मौग्ध्यवैदग्ध्ययो-
र्मन्ये बाल्ययुवत्वयोः शशिमुखी मध्यैकसीमायते॥१५॥

**कादम्बरी**—(स्वगतम्) होदु आआरं दाव पडिवज्जिस्सं।

(छाया—भवतु आचारं तावत् प्रतिपत्स्ये।) (इति सविलासमञ्जलिं बध्नाति)

चन्द्रापीडः—(आत्मगतम्) दृष्टा दर्शनीयानामवधिलेखा। तथाहि—

सीमन्तरत्नरुचिरञ्जितपाणिपद्म-
मालोलकुण्डलपराहतगण्डभागम्।
तन्व्या दरोच्चलितमौक्तिकहारलक्ष्य-
वक्षोजकुम्भमनया रचितोऽञ्जलिर्मे॥ १६॥

(साञ्जलिबन्धं प्रकाशम्) गन्धर्वराजनन्दिनि, किमेवमाचर्यतेऽनुचितम्?

**मदलेखा**—(प्रदर्शितहेमपीठा) इदो णिसीदउ अज्जो।

(छाया—इतो निषीदत्वार्यः।)

**महाश्वेता**—कुमार, एदं आसणं अलंकरेहि।

(छाया—कुमार, एतदासनमलंकुरु।)

**चन्द्रापीडः**—(उपविशति)

**महाश्वेता**—(उपविश्य बलादनिच्छन्तीं कादम्बरीमात्मनः पार्श्वे निवेशयति)

**कादम्बरी**—(चन्द्रापीडमपाङ्गयन्ती स्वगतम्) हद्धि हद्धि, दाणिं एव्व तह कअप्पडिण्णा एआरिसस्स अणणुभूदपुव्वस्स कस्स वि विआरस्स विसओह्मि संवुत्ता।

(छाया—हा धिक् हा धिक्! इदानीमेव तथा कृतप्रतिज्ञा एतादृशस्यानानुभूतपूर्वस्य कस्यापि विकारस्य विषयोऽस्मि संवृत्ता।)

**चन्द्रापीडः**—(आत्मगतम्) कथं खलु ममेदानीमपर्याप्तम्। (सबहुमानम्।) यदियम्—

क्षणमनिभृतभ्रूविक्षेपैः क्षणं मसृणालसैः
क्षणमधिगतव्याजोल्लासैः क्षणं मुकुलीकृतैः।
क्षणमुपनमत्पक्ष्माश्लेषैः क्षणं च निकुञ्चितै-
र्मदयति मनो मुग्धाक्षी मे मुहुर्नयनाञ्चलैः॥ १७॥

**महाश्वेता**—अवि कुसलं सहीए?

(छाया—अपि कुशलं सख्याः?)

**कादम्बरी**—दाणिं तुह्माणं दंसणेण।

(छाया—इदानीं युष्माकं दर्शनेन।)

**महाश्वेता**—कुमार, अवि सुहायदि दे देवीए एसो ववहारक्कमो?

(छाया—कुमार, अपि सुखायते ते देव्या एष व्यवहारक्रमः?)

**चन्द्रापीडः**—किमुच्यते!

शैत्यमिव चन्द्रिकाया माधुर्यमिवैतदमृतधारायाः।
किमपि स्वभावसुभगं पश्यामि सुमानुषं देव्याः॥ १८॥

**कादम्बरी**—(स्वगतम्) अह्मो! चउरालावे सुलहत्तणं राअउत्तस्स। मए उण लज्जावसं गआए सच्चन्ददो पेक्खिदुं वि न पारीअदि।

(छाया—अहो चतुरालापे सुलभता राजपुत्रस्य । मया पुनर्लज्जावशं गतया स्वच्छन्दतः प्रेक्षितुमपि न पार्यते ।)

किंच,

अङ्गाइ जत्तिआइं इमस्स जइ तत्तिआइ मह होन्ति ।
णअणाइ माणसाइ अ तदा सुदिट्ठो इमो होइ ॥ १९ ॥

(छाया—अङ्गानि यावन्त्यस्य यदि तावन्ति मम भवन्ति ।
नयनानि मानसानि च तदा सुदृष्टोऽयं भवति ।)

(इति मदनकातर्यं नाटयति)

**तमालिका**—अइ रमणिज्जो इमो वइअरो ।

(छाया—अयि रमणीयोऽयं व्यतिकरः ।)

**मदलेखा**—कहं विअ ।

(छाया—कथमिव ।)

**कादम्बरी**—(सभ्रूभङ्गं विलोकयति)

**मदलेखा**—(जनान्तिकम्) तमालिए, विरम । कोवकुडिला विअ भट्टिदारिआए दिट्ठी ।

(छाया—तमालिके विरम । कोपकुटिलेव भर्तृदारिकाया दृष्टिः ।)

**तमालिका**—(स्वगतम्) एवं दाव पच्चादइस्सं । (प्रकाशम्) देवस्स सव्वगन्धव्वमण्डलाहिवइणो सामिणो चित्तरहस्स कुमारी करेइ उवआरं । उवअरिदव्वो अ मज्झमलोएक्कचक्कवट्टिणो कुमारो इमो महाभाओ । तह कहं ण सलाहेमि अच्चुदारं इमं सदिअसमाअमं ।

(छाया—एवं तावत्प्रच्छादयिष्यामि। देवस्य सर्वगन्धर्वमण्डलाधिपतेः स्वामिनश्चित्ररथस्य कुमारी करोत्युपचारम्। उपचरितव्यश्च मध्यमलोकैकचक्रवर्तिनः कुमारोऽयं महाभागः। तत्कथं न श्लाघयामि अत्युदारमिमं सदृशसमागमम्।)

**चन्द्रापीडः**—(निरूप्य स्वगतम्) अलं निर्विषयताशङ्कया मनोरथानाम्।

नियमयति सखीं यद्भङ्गुरभ्रूलतेयं
किमपि जनसकाशे सापदेशं ब्रुवाणाम्।
प्रकटयति विलासान् सावहित्थापि भूय-
स्तदिह मृगदृशः स्यान्मद्गतः कोऽपि भावः॥ २०॥

**मदलेखा**—(अपवार्य) सहि जहसमुइअं संभावेहि संभावणिज्जं जणं।

(छाया—सखि, यथासमुचितं संभावय संभावनीयं जनम्।)

**कादम्बरी**—हला तमालिए, कप्पूरवीडिअं उवणेहि।

(छाया—हला तमालिके, कर्पूरवीटिकामुपनय।)

**तमालिका**—(करङ्कादादायार्पयति।)

**कादम्बरी**—(नाट्येनादत्ते)

**चन्द्रापीडः**—(स्वगतम्)

अस्या बाहुलतायां विस्मरनखकिरणकुसुमहारिण्याम्।
विलसन्ति ताम्बूलदलव्याजादाश्चर्यपल्लवोद्भेदाः॥ २१॥

**कादम्बरी**—सहि, पडिच्चेहि इमं।

(छाया—सखि, प्रतीच्छेदम्।)

**महाश्वेता**—णं सव्वेहिं वि अह्मेहिं जुवराओ उवअरिदव्वो।

(छाया—ननु सर्वाभिरप्यस्माभिर्युवराज उपचरितव्यः।)

**चन्द्रापीडः**—महानयं गौरवोत्पादने यत्नः।

**कादम्बरी**—ता तुमं एव्व पडिवाएहि। ण सक्कुणोमि अहं विअड्ढमहिलाविअ उवआरस्स।

(छाया—तत् त्वमेव प्रतिपादय। न शक्नोम्यहं विदग्धमहिलेवोपचारस्य।)

**महाश्वेता**—सहि, अलं लज्जाए। इमस्सिं चिरपरिइदोत्ति पडिपज्जेहि समुइदमाआरं।

(छाया—सखि, अलं लज्जया। अस्मिन् चिरपरिचित इति प्रतिपद्यस्व समुचितमाचारम्।

**सख्यौ**—भट्टिदारिए, अलं लज्जाए। अय्याए णिएसं अणुवट्टेहि।

(छाया—भर्तृदारिके, अलं लज्जया। आर्याया निदेशमनुवर्तस्व।)

**चन्द्रापीडः**—(सरोमाञ्चमात्मानं तां च निर्वर्ण्य, स्वगतम्)

रक्तपाटलमुपोढकोरकं पल्लवेन नवमालिका लता।
स्प्रष्टुमाहितरसापि काङ्क्षति स्वानुवृत्तिमुचितामृतुश्रियः॥२२॥

**कादम्बरी**—(स्वगतम्) किं करेमि। सव्वहा मह सद्धसपरवसाए वेवदि हिअअं। पेक्खन्ति सहीओ। अहवा इमो राअउत्तो एव्व कहं मण्णेअ?

(छाया—किं करोमि। सर्वथा मम साध्वसपरवशाया वेपते हृदयम्। पश्यन्ति सख्यः। अथवा अयं राजपुत्र एव कथं मन्येत?

(इति सहस्तकम्पं महाश्वेतामुखादनाकृष्टदृष्टिरेव वीटिकां प्रसारयति)

**चन्द्रापीडः**—देवि, नान्दीयमस्मदभ्यर्हणनाटिकायाः (नाट्येनादाय सपुलकोत्कम्पमात्मगतम्) असाधारणभागधेयः खलु ममैष दक्षिणः पाणिः; येन हि,

उद्भिन्नपुलककेसरमुदीर्णघर्मोदबिन्दुमकरन्दम्।
तरलाङ्गुलीदलमिदं तन्व्याः करपङ्कजं स्पृष्टम्॥ २३॥

(निरूप्य) हन्त, कथमिदानीमप्यसंतोषो मम।

धृतोत्कम्पात्पाणेर्गलितपतितं रत्नवलयं
न विज्ञातं तन्व्या किमपि किल संमूढमनसा।
मयीव स्यादस्यामपि विषमबाणस्य विकृति-
र्न वेत्यारूढं मे यदिह हृदयं संशयतुलाम्॥ २४॥

**तमलिका**—(सस्मितम् अपवार्य) मअलेहे, पेक्ख उदारत्तणं गन्धव्वराअणन्दिणीए; जं से राअउत्तस्स रअणकंकणं वि उवहारं करेदि।

(छाया—मदलेखे, पश्य उदारत्वं गन्धर्वराजनन्दिन्याः; यदस्य राजपुत्रस्य रत्नकङ्कणमपि उपहारं करोति ।)

**कादम्बरी**—(विभाव्य स्वगतम्) कुदो मे धीरपरिवत्तणं एदं ? जदो करादो णिवडन्तं कडअं वि णावगच्छामि । ण खु महासेदाए अवधारिओ अअं पमाओ ? (साकारसंवरणं रोषमभिनयन्ती) अइ अपण्डिए अवेहि तमालिए, एत्थ तुमं एव्व अवरज्झसि ; जाए पसिढिलबन्धणं मे हत्थाहरणं आमुत्तं आसि । इदो दाव तं उवणेहि ।

(छाया—कुतो मे धैर्यपरिवर्तनमेतत् ? यतः करान्निपतन्तं कटकमपि नावगच्छामि । न खलु महाश्वेतयावधारितोऽयं प्रमादः ? अयि अपण्डिते अपेहि तमालिके, अत्र त्वमेवापराध्यसि; यया प्रशिथिलबन्धं मे हस्ताभरणमामुक्तमासीत् । इतस्तावत्तदुपनय ।)

**तमालिका**—तुमं एव्व गह्णेहि ।

(छाया—त्वमेव गृहाण ।)

**कादम्बरी**—अइ विसमसीले, हिदए दंपि सुमरेहि । सहि मअलेहे, चिट्ठउ एसा असंबद्धभासिणी अन्तच्छन्दआ तमालिआ ; तुमं मे संजोएहि हत्थम्मि एदं ।

(छाया—अयि विषमशीले, हृदये इदमपि स्मर । सखि मदलेखे, तिष्ठत्वेषा असंबद्धभाषिणी अन्तश्छन्दा तमालिका ; त्वं मे संयोजय हस्ते एतत् ।)

**मदलेखा**—(सस्मितमादाय रत्नवलयमामुञ्चति)

**चन्द्रापीडः**—आः सांप्रतमपि सुलभावकाश इव ममायमभिनिवेशः ।

भावोद्भेदमिमं विभाव्य यदियं वैयाकुलीमश्नुते
व्याजं कंचन यत्समञ्जसमिव प्रस्तौति तद्गूहने ।
वाचा वक्रिमगर्भया विवृणुते सख्यां रुषं यत्ततो
मन्ये चेतसि सायकैर्मृगदृशो दत्तं पदं मान्मथैः ॥ २५ ॥

**तमालिका**—(महाश्वेतां प्रत्यपवार्य) पच्चक्खिदाइ खु देवीए सद्धसणिपडिअमणिकडअजणिअवेलक्खाइ ताइ ताइ अवत्थन्तराइ ।

(**छाया**—प्रत्यक्षितानि खलु देव्या साध्वसनिपतितमणिकटकजनित-वैलक्ष्याणि तानि तानि अवस्थान्तराणि ।)

**महाश्वेता**—(अपवार्य) दंसिओ पल्लवुब्भेदो अणुराअपाअवेण । तह वि जावफलोदअं अआणन्तीहिं विअ अह्मेहिं ठादव्वं ।

(**छाया**—दर्शितः पल्लवोद्भेदः अनुरागपादपेन । तथापि यावत्फलोद-यमजानतीभिरिवास्माभिः स्थातव्यम् ।

**चन्द्रापीडः**—(आत्मानं विभाव्य स्वगतम्) ममापि न कथंचिदप्य-पह्नवनीयमिदमवस्थान्तरम् । तथाहि—

उद्गच्छन्ति श्वसितमरुतः संवृणोत्यध्वखेदः
स्वेदोद्भेदः प्रभवतितरामस्ति मध्याह्नतापः ।
अन्तर्मग्नस्मरशरबहिर्लक्ष्यपुङ्खोपमेयै-
र्गात्रं भूयः पुलकनिकरैः पूर्यते किं करोमि ॥ २६ ॥

(प्रविश्य पटाक्षेपेण)

**केयूरकः**—आर्ये महाश्वेते, दिदृक्षते त्वां गुरुजनश्चिरादाश्र-मादुपावृत्ताम् ।

**महाश्वेता**—एसम्मि (उत्थाय) सहि कादम्बरि, कहिं जुवराओ वीसमं अणुहोदु ।

(**छाया**—एषास्मि । सखि कादम्बरि, कुत्र युवराजो विश्रममनुभवतु ।)

**कादम्बरी**—(स्वगतम्) मह एव्व हिअअम्मि । (प्रकाशम्) कहं कहेइ पिअसही? णिअराअउलणिव्विसेसं विहरउ समन्ददो एत्थ राअउत्तो ।

(**छाया**—ममैव हृदये । कथं कथयति प्रियसखी? निजराजकुलनिर्विशेषं विहरतु समन्ततोऽत्र राजपुत्रः ।)

**महाश्वेता**—केऊरअ, पावेहि महाभाअं वसन्तविलासोज्जाणं । तहिं एसो मत्तमऊरए केलिपव्वए वीसमं लहदु ।

(**छाया**—केयूरक, प्रापय महाभागं वसन्तविलासोद्यानम् । तत्रैष मत्तमयूरे केलिपर्वते विश्रमं लभताम् ।)

**केयूरकः**—यदादिशत्यार्या ।

**चन्द्रापीडः**—नन्वियमपि मध्याह्नतापातिशयेन नितरां परिश्रान्ता देवी । तथाहि—

पर्यामृष्टललाम फालफलकं दृष्टिर्दरोन्मेषिणी
म्लानं कर्णशिरीषमीषदधिकश्वासाकुलाः कुन्तलाः ।
भ्रूलास्यं विरतप्रसङ्गमभितः स्विन्ना कपोलस्थली
सोत्कम्पं स्तनयोर्युगं मृगदृशः स्रस्ता च दोर्वल्लरी ॥ २७ ॥

**महाश्वेता**—ता कादम्बरि, तुमं वि अब्भन्तरं पविसेहि ।

(छाया—तत् कादम्बरि, त्वमप्यभ्यन्तरं प्रविश ।)

(इति तरलिकया सह निष्क्रान्ता)

**कादम्बरी**—(स्वगतम्) कहं इमादो पएसादो चलणा एव्व मे ण प्पवट्टन्ति । (प्रकाशम्) तरलिए, तुमं वि जुवराअस्स मग्गं आदेसेहि ।

(छाया—कथमस्मात्प्रदेशात् चरणावेव मे न प्रवर्तेते । तरलिके, त्वमपि युवराजस्य मार्गमादेशय ।)

**तमालिका**—कहं सहीए णिएसं ण करिस्सं । जुवराअ, इदो इदो ।

(छाया—कथं सख्या निदेशं न करिष्यामि । युवराज, इत इतः ।)

**चन्द्रापीडः**—(केयूरकस्य हस्तमवलम्ब्य परिक्रामति)

**कादम्बरी**—मअलेहे, आदेसेहि मग्गं णिद्दाघरस्य ।

(छाया—मदलेखे, आदेशय मार्गं निद्रागृहस्य ।)

(इति मदलेखया सह निष्क्रान्ता)

**चन्द्रापीडः**—(स्वगतम्) किमयमिदानींतन उत नैसर्गिकोऽस्याश्चेष्टाविशेष इति न तावदलमस्मि निर्णेतुम् । तथापि अहो दुर्वार एव मदनविकारः ।

अनुचितमिति यन्निवर्त्यते हृदयमिदं विषयादितो मया ।
स्वयमिव कदर्थनासहं तदिह यथापुरमेव मुह्यति ॥ २८ ॥

केयूरकः—इतो हस्तदक्षिणेन मत्तमयूरावगाहिनी पदवी । वामतश्चास्या देव्या निद्रागृहम् । अस्य च,

वातायनान्तिकविलम्बितपञ्जरस्था
पारावती कनकजालवितीर्णदृष्टिः ।
आबद्धलीलमवलोकयते रिरंसुः
कान्तं विटङ्कमणिकोटिगतं कपोतम् ॥ २९ ॥

चन्द्रापीडः—( सान्तःस्मितमात्मगतम् )

हृदय विरहय्य दयितां किमर्थमपदे प्रयासि वैधुर्यम् ।
मानुषलोकमधुकरः स्पृहयति किं पारिजातमञ्जर्यै ॥ ३० ॥

(इति निष्क्रान्ताः सर्वे)

द्वितीयोऽङ्कः ॥



# तृतीयोऽङ्कः ।

(ततः प्रविशति तरलिका तमालिका च)

**तमालिका**—तरलिए, कीस अय्यमहासेदं उज्झिअ इदो पत्थिदासि ?

(छाया—तरलिके, कुत आर्यमहाश्वेतामुज्झित्वा इतः प्रस्थितासि ?)

**तरलिका**—दाणीं तादचित्तरहस्स अम्बाए मदिराएअ पसादं पडिगेह्णिअ तत्तभवत्ताणं गोरीहंसाणं दंसणणिमित्तं गच्छन्ती एव्व अय्याए पेसिअह्मि जहसमुइअं उवअरिदव्वो जुवराओत्ति देवीए णिवेदेउं ।

(छाया—इदानीं तातचित्ररथस्य अम्बाया मदिरायाश्च प्रसादं प्रतिगृह्य तत्रभवतोर्गौरीहंसयोर्दर्शननिमित्तं गच्छन्त्येवार्यया प्रेषितास्मि यथासमुचितमुपचरितव्यो युवराज इति देव्यै निवेदयितुम् ।)

**तमालिका**—तह करेहि । अत्थ उण को पवुत्तो वुत्तन्दो ?

(छाया—तथा कुरु । अत्र पुनः कः प्रवृत्तो वृत्तान्तः ?)

**तरलिका**—देवीए पडिण्णाणिबन्धणमन्तरा को अवरो पसङ्गो ?

(छाया—देव्याः प्रतिज्ञानिबन्धनमन्तरा कोऽपरः प्रसङ्गः ?)

**तमालिका**—एदं खु सव्वस्स वि गन्धव्वउलस्स दुव्विसहं हिअअसल्लं ।

(छाया—एतत्खलु सर्वस्यापि गन्धर्वकुलस्य दुर्विषहं हृदयशल्यम् ।)

**तरलिका**—अदो एव्व खु महासेदाए आलेक्खसअंवरपअंसिआणं विसाहमम्महणलऊवरजअन्तप्पमुहाणं लोअपालकुमालाणं वि दंसणेण अणक्खित्तहिअअं इमं वसीकादुं एसो अणण्णसुलहसोहग्गसिरी मज्झमलोअराअकुमारो एत्थ आणीदो।

(छाया—अत एव खलु महाश्वेतया आलेख्यस्वयंवरप्रदर्शितानां विशाखमन्मथनलकूबरजयन्तप्रमुखानां लोकपालकुमाराणामपि दर्शनेनानाक्षिप्तहृदयामिमां वशीकर्तुमेषोऽनन्यसुलभसौभाग्यश्रीः मध्यमलोकराजकुमारोऽत्रानीतः।)

**तमालिका**—साहु उवक्खित्तं महासेदाए अणुऊलं एव्व गन्धव्वराअमहीसीए; ताए खु किण्णरमिहुणप्पओएण एसो आअड्ढिओ।

(छाया—साधूपक्षिप्तं महाश्वेतया अनुकूलमेव गन्धर्वराजमहिष्याः; तया खलु किंनरमिथुनप्रयोगेणैष आकृष्टः।)

**तरलिका**—एदं दाव पुच्छामि। जाणादि सही एव्व सहीए हिअअं। अवि अहिरुइअरो एसो देवीए?

(छाया—इदं तावत्पृच्छामि। जानाति सख्येव सख्या हृदयम्। अपि अभिरुचिकर एष देव्याः? ।)

**तमालिका**—णं सव्वेहिं वि अह्मेहिं पच्चक्खिअं तदा देवीए मम्महपरवसं हिअअं।

(छाया—ननु सर्वाभिरप्यस्माभिः प्रत्यक्षितं तदा देव्या मन्मथपरवशं हृदयम्।)

तरलिका—होदु, पच्चा कहं ?

(छाया—भवतु, पश्चात्कथम् ?

तमालिका—जुवराअसमीपदो पडिणिउत्ताए मए सुदं मअलेहामुहादो—गएसु अह्मेसु एदाए उज्झिदसअलवावाराए रअणपलङ्के णिपडिअ उम्मीलिदलोअणाए एव्व ओइट्ठिअमुहीए ठीअदि। दाणीं अह्मवअणाणुबन्धेण णिव्वट्टिअसरीरट्ठिई एसा चन्दसालाए पवादसअणं सेवइ।

(छाया—युवराजसमीपात्प्रतिनिवृत्तया मया श्रुतं मदलेखामुखात्—गतास्वस्मासु एतया उज्झितसकलव्यापारया रत्नपर्यङ्के निपत्य उन्मीलितलोचनयैव ऊर्ध्वस्थितमुख्या स्थीयते। इदानीमस्मद्वचनानुबन्धेन निर्वर्तितशरीरस्थितिरेषा चन्द्रशालायां प्रवातशयनं सेवते।

तरलिका—अअं वि कोवि उक्कण्ठाविआरो पमुहे राअबन्धस्स। अह कहिं सो काअम्बरीहिअअचोरो ?

(छाया—अयमपि कोऽप्युत्कण्ठाविकारः प्रमुखे रागबन्धस्य। अथ कुत्र स कादम्बरीहृदयचोरः?)

तमालिका—सोवि सुहअसेहरो देवीए पेसिआहिं वीढकण्णआहिं सह चउस्सट्ठिकलाप्पसङ्गेण रइअकालक्खेवो मए संभाविअसव्वदिअहव्ववहारो तस्सिं चन्दमणिपव्वए विहरन्तो वट्टइ।

(छाया—सोऽपि सुभगशेखरो देव्या प्रेषिताभिः विदग्धकन्याभिः

सह चतुःषष्टिकलाप्रसङ्गेन रचितकालक्षेपो मया संभावितसर्वदिवसव्यवहारः तस्मिन् चन्द्रमणिपर्वते विहरन् वर्तते ।)

तरलिका—तुमं उण कहिं पत्थिदा ?

(छाया—त्वं पुनः कुत्र प्रस्थिता ?)

तमालिका—अहं वि देवीए णिउत्तम्हि कोसघरादो सेसहारं आणेदुं ।

(छाया—अहमपि देव्या नियुक्तास्मि कोशगृहात् शेषहारमानेतुम् ।)

तरलिका—ता गच्छ । करेहि णिएसं सामिणीए । जाव हंवि देवीए एव्व मुहादो जुवराअस्स विरइअं सुहासिआसंविहाणअं णिसमिअ अय्याए णिवेदेमि ।

(छाया—तद् गच्छ । कुरु निदेशं स्वामिन्याः । यावदहमपि देव्या एव मुखात् युवराजस्य विरचितं सुखासिकासंविधानकं निशम्य आर्यायै निवेदयामि ।)

तमालिका—जुज्जइ ।

(छाया—युज्यते ।)

(इति कोशगृहाभिमुखं परिक्रामति ।)

तरलिका—णूणं एदेण हारविसेसेण जुवराओ उवअरीअदित्ति तक्केमि ।

(छाया—नूनमेतेन हारविशेषेण युवराज उपचर्यत इति तर्कयामि ।)

(इत्युभे निष्क्रान्ते)

प्रवेशकः ।

---

(ततः प्रविशति मरकतशिलातलोपविष्टः केयूरकेणोपास्यमानश्चन्द्रापीडः)

**चन्द्रापीडः**—(आत्मगतम्) अहो दुर्लभविषयस्पृहैकसंधुक्षणव्यसनिता मनोभवस्य—

क्व वयं क्व भूरिसुकृतस्पृहणीयसमागमा रमणी ।
अथवा श्रियं न विरमत्याकाङ्क्षितुमल्पपुण्योऽपि ॥ १ ॥

**केयूरकः**—(स्वगतम्) दिष्ट्यायमपि विभाव्यते देव्यामाबद्धभाव इवानया निश्चलासिकया । यद्वा, किमिदमाश्चर्यमाकर्षति चूतमञ्जरी चञ्चरीकमिति ।

**चन्द्रापीडः**—(साशंसमात्मगतम्) अपि नामेयमर्थेऽस्मिन् जन इवैष स्यात् । (विचिन्त्य)

व्रीडामन्थरभावबन्धमधुरं दृष्टं कटाक्षाञ्चलै-
राली: स्मेरमुखीर्निरीक्ष्य निभृतं भ्रूसंज्ञया तर्जितम् ।
आकृष्टं च कुचोत्तरीयमुचितस्थानस्थमप्येतया
प्रायः पुष्पशरेण पक्ष्मलदृशो लक्ष्यीकृतं स्यान्मनः ॥ २ ॥

(क्षणमात्रं स्थित्वा निश्वस्य) अथवा दूर एवैतत् ;

वद हृदय किमिति वल्गसि संकल्पनिधानमात्रेण ।
यत्किंचनकारितया जनस्य हास्यास्पदं मा भूः ॥ ३ ॥

**केयूरकः**—(विभाव्य आत्मगतम्)

आशंसते किमपि नूनमयं सचिन्तो
गन्धर्वराजतनयां प्रति गाढरागः।
तामन्यथैव परिशङ्क्य निगूढभावां
नैराश्यतः श्वसिति चात्ममनोरथेषु ॥ ४ ॥

(प्रकाशम्) किमुत्कण्ठते स्वजनदर्शनाय युवराजः?

**चन्द्रापीडः**—विस्मारयन्ति खलु संस्तवानुपरोधिनः सिद्धजनसमागमाः। तथाच,

निर्व्याजप्रणयित्वमाहितमिदं पश्यन्महाश्वेतया
दाक्षिण्योपचितप्रसादमधुरां दृष्ट्वा च कादम्बरीम्।
सौजन्यप्रवणाशयं प्रियसखीवर्गं च निर्वर्णयन्
युष्मास्वेक इवास्मि सांप्रतमहं सौहार्दनिघ्नीकृतः ॥ ५ ॥

**केयूरकः**—निसर्ग एवैष सहृदयानामित्यवैमि। न खलु तावत् किमपि हीयते देवस्य दवीयस्तया राजकार्येषु।

**चन्द्रापीडः**—संनिहिते सुहृदि वैशम्पायने स्कन्धावारगतं न किमपि चिन्तनीयम्।

तथापि सौहार्द्ररसार्द्रचित्तः
सोऽयं न जानाति सुखस्थितं माम्।
अत्याहितं प्रत्युत शङ्कमानो
विषीदतीत्येष ममापि खेदः ॥ ६ ॥

**केयूरकः**--सोऽपि न खलु न वेत्ति देवस्य बाहुशौण्डीर्यम् ।

दुष्टसत्त्वबहुलेषु भूभृतां
गह्वरेषु गहनेषु संचरन् ।
निःसहाय इति हन्त चिन्त्यते
धीमता कथय केन केसरी ॥ ७ ॥

तदितो देव्याः स्वहस्तसंवर्धितेषु क्रीडागिरिपरिसरद्रुमेषु विनोद्यतां दृष्टिः ।

**चन्द्रापीडः**—ननु पश्यामि संनिहितसकलर्तुयौवनेऽप्यस्मिन्नुपवने विशेषतो लब्धावसरां निदाघश्रियम् । तथाहि—

शिरीषं लग्नालिप्रकरमनुमेयं प्रणदितैः
प्रतीष्टे स्वेदाम्भोऽपि च किल लता कुड्मलमिषात् ।
रसालो बालोऽयं फलभरनतो भज्यत इव
प्रभूतं सौरभ्यं किरति कुसुमैः पाटलतरुः ॥ ८ ॥

**केयूरकः**—(अन्यतो दृष्ट्वा) कथमियं ससखीजना देवी चन्द्रशालायाम् ।

**चन्द्रापीडः**—(अवलोकयन्नात्मगतम्) इदमपरं लब्धमाश्वासनम् ।

ललन्तं सौधाग्रे ललितमधुरभ्रूविलसितैः
स्मितोदञ्चद्दन्तद्युतिनिचयसंभेदशबलैः ।
अपाङ्गैराकर्षत्यसकृदियमालग्नकुसुम-
च्छदच्छायालैर्मां कुवलयमयैर्दामभिरिव ॥ ९ ॥

**केयूरकः**—(स्वगतम्)

नूनं शालीनयोरेवं यूनोरुत्कण्ठमानयोः।
अन्योन्यदृष्टिसंभेदः स्वदते संगमादपि ॥ १० ॥

**चन्द्रापीडः**— अये, किमेतत्!

आलोकते निभृतविभ्रममायताक्षी
वल्गत्कुचं हसति संविहितापदेशा।
यद्वा निसर्गसुलभानि हि कामिनीनां
नानाविधानि नवयौवनचेष्टितानि ॥ ११ ॥

(ततः प्रविशति यथानिर्दिष्टा कादम्बरी सख्यौ च।)

**कादम्बरी**—(स्वगतम्) अह्मो अवितिण्हपेक्खणिज्जत्तणं मज्झमलोअराअचन्दस्स। हद्धि, हद्धि। कहिं मे कोमारसुलहाइं लज्जामुद्धत्तणाइं?

**(छाया—अहो, अवितृष्णप्रेक्षणीयत्वं मध्यमलोकराजचन्द्रस्य। हा धिक्, हा धिक्। कुत्र मे कौमारसुलभानि लज्जामुग्धत्वानि?)**

**तमालिका**—एसो खु मणिपव्वअसिहरमण्डणाइदम्मि महुअरगरुणिअरवइअरणिपतन्तपडिणवपाडलपुप्फपडलविरइदोवहारम्मि णोमालिआलआघरम्मि मरगअसिलातलं अलंकरेन्तो राअउत्तो।

**(छाया—एष खलु मणिपर्वतशिखरमण्डनायिते मधुकरगरुन्निकरव्यतिकरनिपतत्प्रतिनवपाटलपुष्पपटलविरचितोपहारे नवमालिकालतागृहे मरकतशिलातलमलंकुर्वाणो राजपुत्रः।**

**चन्द्रापीडः**—(निर्वर्णयन्नात्मगतम्)

मुहुः कण्ठे सख्याः कलयति सलीलं भुजलतां
करस्थं कल्हारस्तबकमियमाजिघ्रति मुहुः ।
नखाग्रैस्ताम्बूलीदलमपि मुहुः पाटयति य-
त्तदस्याः सोल्लेखं किमपि हृदयं नूनमधुना ॥ १२ ॥

**केयूरकः**—(स्वगतम्) दिष्ट्या सदृश एवानयोर्मनोभवाभियोगः । यतः,

विविधैरियं विलासैः सूचयति यथा यथा निजं भावम् ।
स्वयमपि तथा तथायं व्यज्यत एव प्ररोहदनुरागः ॥ १३ ॥

**कादम्बरी**—(स्वगतम्) रे हिअअहअअ साहसिअत्तणं छादय । अदिट्ठपुव्वं जणं चिरपरिइदं विअ विआरेसि । जइ सो तुह्म भाअधेअविपरिआसेण पच्चक्खाणपरंमुहो होइ, तदा का गई ?

**(छाया—रे हृदयहतक, साहसिकत्वं छादय । अदृष्टपूर्वं जनं चिरपरिचितमिव विचारयसि । यदि स तव भागधेयविपर्यासेन प्रत्याख्यानपराङ्मुखो भवेत्, तदा का गतिः ?)**

**मदलेखा**—(अपवार्य) तमालिए, दाणिं वि एदाए तत्तहिअआए होदव्वं; जं अन्तलज्जिअत्तणेण महवि खु ण कहेइ हिअअगअं ।

**(छाया—तमालिके, इदानीमपि एतया तत्तहृदयया भवितव्यम्; यदन्तर्लज्जितत्वेन ममापि खलु न कथयति हृदयगतम् ।)**

**तमालिका**—होदु कमदो एव्व जाणीमो।

(**छाया**—भवतु क्रमत एव जानीमः।)

**चन्द्रापीडः**—(स्वगतम्) अहो कथमेवंविधापि विद्यते वैधसी सृष्टिः?

चन्द्रेन्दीवरशङ्खचन्दनलताचक्राह्वभृङ्गावली-
व्योमावर्तरथाङ्गराजकदलीराजीवरत्नाङ्कुरैः।
एकीकृत्य निवेशितैरवशतां नेतुं ममैवाशयं
शङ्के शम्बरशासनेन रचिता कादम्बरी शाम्बरी॥ १४॥

किंच,

पादाग्रेण स्पृशन्त्यामवनिमधिसखि स्थापितोत्तानिताग्रे
वामे कल्हारमालावलयवति करे साचि वक्त्रं निधाय।
लीलाम्भोजं परेण श्रमसलिलगत्पक्ष्म संचालयन्त्या-
मस्यां यद्यन्मदीयं कलयति हृदयं वेत्ति तत्तन्मनोभूः॥१५॥

**केयूरकः**—(आत्मगतम्)

इतरेतरमेवमेधमानप्रणयं द्वन्द्वमिदं समागमय्य।
अचिरादवृथाश्रमः स्वशिल्पे चरितार्थश्चतुराननो भवेत्किम्॥१६॥

**कादम्बरी**—(स्वगतम्) णं अज्ज मिप्पिण्डबुद्धी वि लोओ विआरं मे णिरूवेइ, किं उण अणुहूदसअलमअणवुत्तन्ता महासेदा; जाए सहित्तणं अवेक्खिअ तह मए पत्थुदव्वावारविवरीदा विरइआ

पडिण्णा । किंचेमं वइअरं आअण्णिअ तह मोहिदब्भत्थणा किं कहेइ अम्बा तादो वा ।

छाया—नन्वद्य मृत्पिण्डबुद्धिरपि लोको विकारं मे निरूपयति, किं पुनरनुभूतसकलमदनवृत्तान्ता महाश्वेता ; यस्याः सखित्वमवेक्ष्य तथा मया प्रस्तुतव्यापारविपरीता विरचिता प्रतिज्ञा । किंचेमं व्यतिकरमाकर्ण्य तथा मोघिताभ्यर्थना किं कथयेत् अम्बा तातो वा ।

तमालिका—भट्टिदारिए कुदो एव्वं आउलत्तणं वहसि ?

(छाया—भर्तृदारिके कुत एवमाकुलतां वहसि ?)

कादम्बरी—(अनाकर्णनं नाटयन्ती स्वगतम्) केण वा किंणिमित्तं इमो मुद्धमहिलाए हिअअविप्पलम्भइत्तओ राअउत्तो उवट्ठाविदो । अहवा मह हिअउम्महणकअग्गहेण मम्महेणेव्व उवक्खित्तो ।

(छाया—केन वा किंनिमित्तमयं मुग्धमहिलाया हृदयविप्रलम्भयितृको राजपुत्र उपस्थापितः ? अथवा मम हृदयोन्मथनकृताग्रहेण मन्मथेनैवोपक्षिप्तः ।)

मदलेखा—सहि कहेहि दे चित्तावक्खेवकालणम् ; जदो पुच्छिज्जत्तं वि अत्ताणं ण जाणासि ।

(छाया—सखि कथय ते चित्तावक्षेपकारणम् ; यतः पृच्छ्यमानमपि आत्मानं न जानासि ।

कादम्बरी—(स्वगतम्) किं बहुणा । सहीजणस्स वि

उवहसणिज्जह्मि । कं करेमि ? कस्स वा णिवेएमि ? असंसअं मरणं एव्व मे सरणं । किं इमिणा णिच्चिदवेलक्खजीअन्तमरणेण मअणहअअस्स णिएसाणुवट्टणेण ?

(छाया—किं बहुना । सखीजनस्याप्युपहसनीयास्मि । किं करोमि ? कस्य वा निवेदयामि ? असंशयं मरणमेव मे शरणम् । किमनेन निश्चितवैलक्ष्यजितमरणेन मदनहतकस्य निदेशानुवर्तनेन ?)

**तमालिका**—(अपवार्य) मअलेहे, एत्थ दाव तुमं पुडीकरेहि किंवि ।

(छाया—मदलेखे, अत्र तावत् त्वं प्रकटीकुरु किमपि ।)

**मदलेखा**—(स्वगतम् ) एवं दाव ।

(छाया—एवं तावत् ।)

**चन्द्रापीडः**—(स्वगतम् )

यदि नाम भजेदियं नतभ्रू-
विषमास्त्रस्य शरव्यतां यथाहम् ।
किमिवान्यदुदञ्चिता तदानीं
मम सौभाग्यविलासवैजयन्ती ॥ १७ ॥

विभाव्य,

आकीर्णान् किल तालवृन्तमरुता संशोषयन्ती कचान्
लीलाचङ्क्रमणात् किल श्लथमुखीं नीवीं शनैर्बध्नती ।
मुक्तादामसमाधये किल कुचाभोगे करं कुर्वती
कं वा भावमियं न सूचयति मे चेतस्तथाप्याकुलम् ॥ १८ ॥

केयूरकः--(स्वगतम्)

निभृतानुरक्तिरस्मिन्नियमनुशेते कृतप्रतिज्ञतया ।
अविभाव्यतयैवास्या भावस्यायं च संशेते ॥ १९ ॥

मदलेखा--णं किं अण्णं ? आन्दोलअइ हिअअं अच्चुदारप्पकिदी राअउत्तो अह्मगएण दक्खिणत्तणेण तं एकावलिं पडिच्छइ ण वेत्ति ।

(छाया—ननु किमन्यत् ? आन्दोलयति हृदयम् अत्युदारप्रकृती राजपुत्रः अस्मद्गतेन दाक्षिण्येन तामेकावलीं प्रतीच्छति न वेति ।

कादम्बरी--(स्वगतम्) अण्णो अभिप्पाओ एव्वं पआसिओ होदु । एदं वि मे आसंसणिज्जं एव्व से राअउत्तस्स पणअपरिक्खणम् । (प्रकाशम्) अह तुमं किं मण्णसि एत्थ विसअम्मि ?

(छाया—अन्योऽभिप्राय एवं प्रकाशितो भवतु । एतदपि मे आशंसनीयमेवास्य राजपुत्रस्य प्रणयपरीक्षणम् । अथ त्वं किं मन्यसेऽत्र विषये ?)

मदलेखा--ण खु सो अक्खअसोहग्गणिही देवीए वअणं उवेक्खइ ।

(छाया—न खलु सः अक्षयसौभाग्यनिधिर्देव्या वचनमुपेक्षते ।)

कादम्बरी—तरलिए कहेहि ; कहं एदं ?

(छाया—तरलिके कथय ; कथमेतत् ?)

तरलिका--अग्गेसरो खु एसो सरलहिअआणं ; पूरेइ एव्व मणोरहं देवीए ।

(छाया—अग्रेसरः खल्वेष सरलहृदयानाम्; पूरयत्येव मनोरथं देव्याः।

**कादम्बरी**—महदिव खु गुरुअत्तणं अज्जाए। (स्वगतम्) जावतरलिआगमणं इमं एव्व णिज्झाअन्ती णअणे विणोएमि। (इति पश्यति)

(छाया—महदिव खलु गौरवमार्यायाः। यावत्तरलिकागमनमिममेव निध्यायन्ती नयने विनोदयामि।

**चन्द्रापीडः**—(स्वगतम्)

औचित्यैकप्रवणमनसो हन्त सांदृष्टिकं मे
निर्वेष्टुं यत्सुदृशि करणैः शङ्क्यमानैर्न तावत्।
स्थाने तस्याप्यनुभवसुखं प्राप्य तत्तन्मयत्वं
किं किं चक्षुर्न सुलभयति प्रार्थनीयेष्विदानीम्॥ २०॥

(नेपथ्ये) **वैतालिकौ**—जय जय जगत्पते चन्द्रापीड, सुखाय ते भवतु तृतीयसन्ध्यासमयः।

**प्रथमः**—

अह्नो वृक्षस्य पक्वं पतति फलमिवाताम्रमुष्णांशुबिम्बं
पादाः पुष्णन्ति तस्य क्षितिधरकरिणां मूर्ध्नि सिन्दूरबुद्धिम्।
सन्ध्यारागः प्रतापानल इव मदनक्ष्मापतेरुज्जिहीते
कस्तूरीलेपरीतिं रचयति च तमो दिग्वधूनां मुखेषु॥ २१॥

**द्वितीयः—**

गुञ्जद्भिर्मदमञ्जुलं मधुकरव्रातैर्वृता वाञ्छति
द्वित्रैरुच्छ्वसितैर्दलैर्विकसितुं सायंतनी मल्लिका ।
पर्यायेण च पारिहार्यनिनदः पश्चात्स्वमुद्बोधयन्
घर्मग्लानिविनोदनर्म पिशुनत्येणीदृशां मज्जनम् ॥ २२ ॥

**केयूरकः—**एष सेवते देव्याः परिजनो युवराजमवसरावेदनेन ॥ इदानीं च,

मीलत्पद्ममुखी दिनान्तमरुतं निश्वासमुन्मुञ्चती
सन्ध्यापल्लवतल्पमाश्रितवती स्विन्नेव तारागणैः ।
क्रोशत्कोकयुगप्रलापकरुणं कान्ता तमोजृम्भणै-
र्वेला कापि विलासिनीव विरहक्लिष्टेयमालक्ष्यते ॥२३॥

**चन्द्रापीडः—**अये, कथमुपसंहृतालोको दिवसः ! कष्टमिदानीम् ;

अमृतरसमुद्गिरन्ती चकोरयोरिव हि नयनयोरनयोः ।
कादम्बरीति कान्ता तिरोहिता कापि चन्द्रकला ॥ २४ ॥

**केयूरकः—**अतः परममृतकरकिरणकन्दलीसुलभनिष्यन्दचन्द्रोपलघटितसोपानं भवनकुमुदिनीतटोपकण्ठं परिष्करोतु देवः ।

**चन्द्रापीडः—**(स्वगतम्) तत्र वा विनोदयाम्यात्मानम् ।

**केयूरकः—**इत इतो युवराजः ।

**चन्द्रापीडः**—(उत्थाय परिक्रम्यावलोक्य च) हृदयंगमः खलु कुमुदाकरः । तथाहि—

मणिभङ्गनिर्मलजलाभिपूरितः
स्फुटकैरवप्रकर एष राजते ।
प्रतिबिम्बितस्फटिककुट्टिमोदरे
गगनैकदेश इव तारकाङ्कितः ॥ २५ ॥

यावदिहैवानुष्ठितसायंतननियमो भवामि ।

(इति निष्क्रान्तः)

**कादम्बरी**—(स्वगतम्) अम्हो णिब्भराअन्ते तमम्मि दट्टुं ण पारीअदि अहिरूवो जणो (प्रकाशम्) कहं दाणिं वि कोसघरादो आगमिदुं तमालिआ विलम्बइ ?

(छाया—अहो निर्भरायिते तमसि द्रष्टुं न पार्यते अभिरूपो जनः । कथमिदानीमपि कोशगृहादागन्तुं तमालिका विलम्बते ?)

(प्रविश्य समुद्गकहस्ता)

**तमालिका**—एसो आणीदो सेसहारो।

(छाया—एष आनीतः शेषहारः ।)

**कादम्बरी**—(उत्थाय) अह सो कहिं महाभाओ ?

(छाया—अथ स कुत्र महाभागः ?)

**तरलिका**—णं दाणीं लआघरे दिट्ठो ।

(छाया—नन्विदानीं लतागृहे दृष्टः ।)

**मदलेखा**—दाणीं च कहिंति परिअणमुहादो जाणीमो ।

(**छाया**—इदानीं च कुत्रेति परिजनमुखाज्जानीमः ।)

**कादम्बरी**—(नेपथ्यं प्रति) का एत्थ पडिहारआणं ?

(**छाया**—कात्र प्रतिहारिकाणाम् ?)

(प्रविश्य)

**विजया**—एसह्मि ।

(**छाया**—एषास्मि ।)

**कादम्बरी**—विअए, गच्छ। जाणिअ णिवेएहि मे राअउत्तस्स अवत्थाणं ।

(**छाया**—विजये, गच्छ । ज्ञात्वा निवेदय मे राजपुत्रस्यावस्थानम् ।)

**विजया**—जं देवी आणवेदि ।

(**छाया**—यत् देव्याज्ञापयति ।)

(इति निष्क्रम्य प्रविश्य च)

भट्टिदारिए भवणकुमुइणीतडं सणाहीकरेइ सो महाभाओ ।

(**छाया**—भर्तृदारिके, भवनकुमुदिनीतटं सनाथीकरोति स महाभागः ।)

**मदलेखा**—उट्ठेदु देवी ।

(**छाया**—उत्तिष्ठतु देवी ।)

(सर्वा उत्थाय परिक्रामन्ति ।)

**विजया**—इमाओ दीपिआधारिणीओ उवट्ठिआओ ।

(**छाया**—इमा दीपिकाधारिण्य उपस्थिताः ।)

तरलिका—विअए, देवीए मग्गं आदेसेहि ।

(छाया—विजये, देव्या मार्गमादिश ।)

विजया—इदो इदो देवी ।

(छाया—इत इतो देवी ।)

(कादम्बरी ससखीजना सौधादवतीर्य क्रीडापर्वताधिरोहणं नाटयति) ।

कादम्बरी—तरलिए, तुमं एव्व महासेदाए पच्चणन्तरा । ता तुमं एव्व एत्थ पभवसि ।

(छाया—तरलिके, त्वमेव महाश्वेतायाः प्रत्यनन्तरा । तत् त्वमेवात्र प्रभवसि ।)

मदलेखा—एव्वं एव्व । तमालिए, तरलिआए हत्थंमि अप्पेहि सेसहारं ।

(छाया—एवमेव । तमालिके, तरलिकाया हस्ते अर्पय शेषहारम् ।)

तमालिका—(समुद्गकमर्पयति ।)

तरलिका—(नाट्येनादाय) सच्चं तेण परिग्गहीअं करेमि इमं ।

(छाया—सत्यं तेन परिगृहीतं करोमीमम् ।)

मदलेखा—अण्णहा महन्तो खु देवीए हिअअसंखोभो भवे ।

(छाया—अन्यथा महान् खलु देव्या हृदयसंक्षोभः भवेत् ।)

तमालिका—अम्हो दुवे वि एदे अहिणन्दणिज्जा उदारेसु । एक्का ईरिसस्स तेल्लोक्कमुल्लस्स से रअणस्स पडिवाअणे सणिब्बन्धा । अण्णो इमस्स पडिग्गहम्मि विस्सअणिज्जो ।

(छाया—अहो द्वावप्येतौ अभिनन्दनीयावुदारेषु। एका ईदृशस्य त्रैलोक्यमूल्यस्यास्य रत्नस्य प्रतिपादने सनिर्बन्धा। अन्योऽस्य प्रतिग्रहे विश्वसनीयः।

**मदलेखा**—एसो कप्पूरकअलिआपरिक्खित्तोभयपासो पफुल्लमल्लिअपुप्फसोरहणिसण्णमहुअरझंकारमुहरिअदुवारदेसो कुमुइणीतडपरिसरो।

(छाया—एष कर्पूरकदलिकापरिक्षिप्तोभयपार्श्वः प्रफुल्लमल्लिकापुष्पसौरभनिषण्णमधुकरझंकारमुखरितद्वारदेशः कुमुदिनीतटपरिसरः।

**कादम्बरी**—विअए, णिवेएहि जुवराअस्स अह्मआअमणं।

(छाया—विजये, निवेदय युवराजस्यास्मदागमनम्।)

**विजया**—(अग्रतो गत्वा) एसो खु चन्दसिलापट्टअणिसण्णो केऊरअसहाओ राअउत्तो।

(छाया—एष खलु चन्द्रशिलापट्टकनिषण्णः केयूरकसहायो राजपुत्रः।)

(उपसर्पति)

**केयूरकः**—देव, अवधार्यतामितः—

कैरवसुगन्धिमारुतहृतरतिखेदानि हंसमिथुनानि।
क्रीडन्ति पक्षपालीकृतेतरेतरशरीरसंश्लेषम् ॥ २६ ॥

**चन्द्रापीडः**—

प्रशिथिलसन्ध्यावसानतारामौक्तिकनिकायनेपथ्या।
लक्ष्येन्दुबिम्बवदना कस्य न कामाय वेलेयम् ॥ २७ ॥

विजया—(उपसृत्य) जुवराअ, एसा उवट्ठिदा देवी काअम्बरी।

(छाया—युवराज, एषोपस्थिता देवी कादम्बरी।)

चन्द्रापीडः—(सहर्षबहुमानम्) एष प्रत्युद्गतोऽहम्। आशु प्रवेशय।

विजया—(निवृत्य कादम्बरीमुपसर्पयति।)

चन्द्रापीडः—केयूरक, किमेवमाचर्यतेऽनुचितं देव्या?

किमुपैति मरालमब्जिनी
परपुष्टं सहकारवल्लरी।
अपि नीपलता शिखावलं
भ्रमरं वा नवमालिका स्वयम्॥ २८॥

केयूरकः—एवं नामाभिजात्यं मुखरयति।

विजया—(उपसृत्य) भट्टिदारिए, उवसप्प उवसप्प।

(छाया—भर्तृदारिके, उपसर्प उपसर्प।)

कादम्बरी—तुमं दाव गुरुअणसआसादो णिवट्टिअं अय्यमहासेदं पडिपालिअ मे णिवेएहि।

(छाया—त्वं तावत् गुरुजनसकाशात् निवृत्तामार्यमहाश्वेतां प्रतिपाल्य मह्यं निवेदय।

विजया—तह।

(छाया—तथा।)

(इति निष्क्रान्ता)

**चन्द्रापीडः**—(पुरोऽवलोक्य)

इयं परीता वरवर्णिनीभिः
करान्रजाग्रन्मणिदीपिकाभिः ।
विभ्राजते पाटलपल्लवाभि-
र्वसन्तलक्ष्मीरिव वल्लरीभिः ॥ २९ ॥

(निरूप्य) अहो वैहारिकवेषचातुर्यं गन्धर्वराजपुत्र्याः ।

तथाहि—

आलिप्ताङ्गी विरलमधिकोद्गन्धिना चन्दनेन
क्षौमं ज्योत्स्नाच्छवि कुचतटेनोद्वहन्ती लघीयः ।
मालां सौगन्धिकदलमयीं कुन्तलैर्मानयन्ती
दत्ते प्रीतिं वरतनुरियं चारुमुक्ताकलापा ॥ ३० ॥

(केयूरकावलम्बितहस्त उत्थाय) देवि, इत इतः ।

**कादम्बरी**—(शृङ्गारलज्जां नाटयन्ती स्वगतम्) जं जं इमस्स अदंसणे काउं आसंसामि तं तं से दंसणपरवसा विसुमरामि ।

(**छाया**—यद्यत् अस्यादर्शने कर्तुमाशंसामि तत्तदस्य दर्शनपरवशा विस्मरामि ।

**चन्द्रापीडः**—देवि परिजनेष्वपि कोऽयमादरातिशयः ।

तनुतरमिदमङ्गं तत्र मध्यं तनीयः
स्तनयुगमतिकुम्भं दुर्वहोऽयं नितम्बः ।

अलसगतिरसि त्वं यत्प्रकृत्यैव मन्ये

तव न खलु तदेवं युज्यते पादचारः ॥ ३१ ॥

**कादम्बरी**—(जनान्तिकम्) मअलेहे विण्णवेहि महामाअं आसणं अलंकरिदुं।

(**छाया**—मदलेखे, विज्ञापय महाभागमासनमलंकर्तुम्।)

**चन्द्रापीडः**—अयमुपविष्टोऽस्मि। इत आस्तां देवी।

(सर्वे यथार्हमुपविशन्ति)

**चन्द्रापीडः**— तरलिके, कृताह्निका कच्चिदार्या महाश्वेता?

**तरलिका**—दाणिं तादसमक्खंमि अम्बाए णिब्बन्धेण पमअवणोपणीएहिं फलमूलकन्देहिं कअसरीरवुत्ती आसि।

(**छाया**—इदानीं तातसमक्षम् अम्बाया निर्बन्धेन प्रमदवनोपनीतैः फलमूलकन्दैः कृतशरीरवृत्तिरास्ते।

**चन्द्रापीडः**—हन्त हन्त,

रागोऽयमीदृशोऽस्याः कामेनारोपितः परां कोटिम्।

दयया विधेः कदा वा कथं नु भविता सुखोदर्कः ॥ ३२ ॥

**केयूरकः**—असंशयमसौ युष्मादृशां महापुरुषाणामनुग्रहविशेषेण निर्वहणरमणीयतां यास्यति।

**चन्द्रापीडः**—मदलेखे, अदृष्टपूर्वोऽयं देव्याः प्रसादातिशयः परिजने।

येनोपचारशतपेशलतां गतेन
क्रीतं तथेदमनया हृदयं मदीयम् ।
शक्यं यथा भवति जन्मसहस्रतोऽपि
नानृण्यमाप्तुमुपकारपरंपराभिः ॥ ३३ ॥

**केयूरकः**—स्थाने खलु सौहार्दादत्रभवाननुवर्त्यते भर्तृदारिकया ।

पश्य,

कुलमिव विमलं यशस्त्वदीयं
ननु तव वेष इवोज्ज्वलः प्रतापः ।
वितरणमिव ते श्रुतं विशालं
वच इव तावकमूर्जितं चरित्रम् ॥ ३४ ॥

**कादम्बरी**—(मदलेखां पश्यति)

**मदलेखा**—(उत्थाय, परिजनं प्रति) दारिआओ, उवणेह पडलआइं ।

(छाया—दारिकाः, उपनयत पटलकानि ।)

**परिजनः**—एदं एदं ।

छाया—(इदमिदम् ।)

(इत्यर्पयति)

**मदलेखा**—(नाट्येनादाय) जुवराअ पुढमदंसणमेत्तसुलहवीसंभाणं अह्माणं सहिज्जउ इअं एक्का उवरोहकअत्थणा ।

(छाया—युवराज प्रथमदर्शनमात्रसुलभविस्रम्भानामस्माकं सह्यता-मियमेका उपरोधकदर्थना।)

चन्द्रापीडः—सखि, किमुच्यते ? अनुग्रहः खल्वयम्।

मदलेखा—(माल्याङ्गरागादिकं ददाति) तरलिए, इदो दंसेहि तं।

(छाया—तरलिके, इतो दर्शय तम्।)

तरलिका—(समुद्गकमुद्घाटयति)।

चन्द्रापीडः—(सदृष्टिक्षेपम् आश्चर्यं नाटयन्)

अये चन्द्रालोकः किमु समय एवैष सुलभो
विकीर्णः किं वायं वियति घनसारद्रवरसः।
असौ गङ्गापूरः पतति सुरलोकात् किमथवा
समीरैराहोस्वित्प्रसरति रजः कैतकमिदम्॥ ३५॥

(विभाव्य, स्वगतम्) कथमयं नीलमणिसंपुटे निक्षिप्तस्य नूतननलिनीदलन्यस्तमृणालवलयानुकारिणो मुक्ताहारस्य प्रभाप्रसरः।

तरलिका—एसा जुवराअस्स वच्छत्थलप्फसलोहेण पुलअपडलेहिं विअ पूरिआ दीसइ पसरंतेहिं मऊहजालेहिं मुत्तावली।

(छाया—एषा युवराजस्य वक्षःस्थलस्पर्शलोभेन पुलकपटलैरिव पूरिता दृश्यते प्रसरद्भिर्मयूखजालैर्मुक्तावली।)

(इति ददाति)

चन्द्रापीडः—मदलेखे, कोऽयमपरोऽध्यवसायः ?

अनर्घैरमलैर्देव्या गुणैरेव हृतोऽस्म्यहम् ।
मुक्तागुणेन भूयोऽपि किमनेन करिष्यति ॥ ३६ ॥

**मदलेखा**—(नाट्येन हारमादाय, सप्रणामम् ) महाभाअ, तुह एव्व अणण्णसुलहेण सुअणत्तणेण उवरूढप्पणआ देवी विण्णवेदि ; ण उण विभवगव्वेण ।

(**छाया**—महाभाग, तवैव अनन्यसुलभेन सुजनत्वेनोपारूढप्रणया देवी विज्ञापयति ; न पुनर्विभवगर्वेण ।)

**चन्द्रापीडः**—किमाज्ञापयति ?

**मदलेखा**—महाभाएण सअं एव्व हठादो मे सरीरं हिअअं जीविअं सव्वं वि परिगहीदं । तदो किं उण मए अब्भअहिदव्वस्स दे अवरं दिज्जइ । तहवि एसो तिदसेहिं महणसमुद्धरिआणं रअणाणं एक्क एव्व सेस इदि सेसनामा हारो समुद्देण उवहारीकओ गन्धव्वराअस्स; इमिणा अ मह कण्ठाभरणत्तणं णीदो ; दाणिं चेममलं-कुरेत्तेण कुमालेण जणे इमस्सिं दंसणिज्जो पसादोत्ति ।

(**छाया**—महाभागेन स्वयमेव हठान्मे शरीरं हृदयं जीवितं सर्वमपि परिगृहीतम् । ततः किं पुनर्मया अभ्यर्हितव्यस्य ते अपरं दीयते । तथापि एष त्रिदशैर्मथनसमुद्धृतानां रत्नानामेक एव शेष इति शेषनामा हारः समुद्रेण उपहारीकृतो गन्धर्वराजस्य ; अनेन च मम कण्ठाभरणत्वं नीतः; इदानीं चेममलंकुर्वता कुमारेण जनेऽस्मिन् दर्शनीयः प्रसाद इति ।)

**चन्द्रापीडः**—(स्वगतम् ) स्पृहणीयसंस्पर्शेयं मुक्तालता देव्याः स्वाङ्गसंश्लेषोपलालितेति । (प्रकाशम् ) तर्हि,

हंसावलीव गङ्गां प्रसूनमालेव पारिजातलताम् ।
एकावलीयमर्हति देवीं न कदापि विरहयितुम् ॥ ३७ ॥

**कादम्बरी**—(तरलिकामुखं पश्यति)

**तरलिका**—इमिणा अत्तणो पुडमप्पणअप्पसरभङ्गेण देवीए तुह अ सखित्तणणिमित्तभूदा अय्या उवालम्भिज्जइ । जइ तं अखेद-णिज्जं इच्छसि ता सिढिलेहि पच्चक्खाणपरुसत्तणं ।

(**छाया**—अनेनात्मनः प्रथमप्रणयप्रसरभङ्गेन देव्यास्तव च सखित्वनि-मित्तभूता आर्या उपालभ्यते । यदि तामखेदनीयामिच्छसि तच्छिथिलय प्रत्याख्यानपरुषत्वम् ।)

**कादम्बरी**—(स्वगतम्) साहु, जं मए विवक्खिदं तं एव्व आचक्खिदं तरलिआए ।

(**छाया**—साधु, यन्मया विवक्षितं तदेव आख्यातं तरलिकया ।)

**चन्द्रापीडः**—

इह कथमियमन्यथा सुधांशुः
प्रथयति चन्द्रिकया निशीथिनीं यत् ।
यदपि जलधरः कदम्बवल्ली-
मुकुलपरंपरया परिष्करोति ॥ ३८ ॥

**केयूरकः**—मा मैवम् ।

निःशेषदत्तकलशार्णवरत्नजातो
देवः सरोजनयनोऽपि सुरासुरेभ्यः ।

यत्कौस्तुभं वहति वक्षसि तत्र लक्ष्मी-
दाक्षिण्यमेव खलु कारणमीक्षणीयम् ॥ ३९ ॥

**चन्द्रापीडः**—(स्वगतम्) निपुणः केयूरकः ।

**तमालिका**—मअलेहे, देवीए हत्थंमि देहि मुत्तावलिं । सअं एव्व से कण्ठम्मि अवलम्बिज्जदु एसा ।

(छाया—मदलेखे, देव्या हस्ते देहि मुक्तावलिम् । स्वयमेवास्य कण्ठे अवलम्बयत्वेषा ।)

**तरलिका**—ण खु अण्णहा अणुमण्णइ इमो ।

(छाया—न खल्वन्यथा अनुमन्यतेऽयम् ।)

**मदलेखा**—जुज्जइ ।

(छाया—युज्यते ।)

(इति कादम्बरीहस्ते शेषहारमर्पयति)

**कादम्बरी**—(नाट्येनादाय तथा करोति ।)

**चन्द्रापीडः**—(स्वगतम्) जातं मे जन्मसाफल्यम् । यतः ;

विलसत्पुलकाग्रपाणिवल्ग-
त्कुचमीषत्परिलक्ष्यबाहुमूलम् ।
वरणस्रगिवानयाधिकण्ठं
मम मुक्तालतिका स्वयं पिनद्धा ॥ ४० ॥

(प्रकाशम्) ननु प्रभव एव प्रभवन्ति संभावनेषु परिजनस्य ।

**मदलेखा**—दाणीं खु अम्हेवि भट्टिदारिआए बहुमदाओ ।

(छाया—इदानीं खलु वयमपि भर्तृदारिकया बहुमताः ।)

**चन्द्रापीडः—**

एष सौहार्दमूल्येन क्रीतोऽहं दासतां गतः ।
देव्या नियोजनीयोऽस्मि कर्तव्येषु कृतं गिरा ॥ ४१ ॥

**केयूरकः—**नन्विदमस्मदभिधेयमभिधीयते युवराजेन ।

**चन्द्रापीडः—**(स्वगतम्) अयि कादम्बरीकण्ठग्रहणसुभग शेषहार,

एतावन्तमनेहसं त्रिभुवने धन्यस्त्वमेवाभवः
किं वान्यत् कमनीयवस्तुषु भवत्यन्वेषणीयं तव ।
कन्दर्पद्विपकुम्भपीठयुगलीसादृश्यमासेदुषोः
सुश्रोण्याः स्तनयोस्त्वया हि सुचिरं नक्षत्रमालायितम् ॥ ४२ ॥

**कादम्बरी—**(अपवार्य) सहि, पुच्छीअदु राअउत्तो किं उज्जइणीगअं खन्दावारगअं वा अहिमदजणं सुमरिअ पय्युसिओ होदित्ति ।

(छाया—सखि पृच्छ्यतां राजपुत्रः किमुज्जयिनीगतं स्कन्धावारगतं वाभिमतजनं स्मृत्वा पर्युत्सुको भवतीति ।)

**तमालिका—**(सस्मितम्) तुमं एव्व पुच्छेहि ।

(छाया—त्वमेव पृच्छ ।)

**कादम्बरी—**(अपवार्य) तमालिए तुमं चिट्ठ । सहि मअलेहे, एसो दे अञ्जई । तुमं एक्कं मे वअणं करेहि ।

(छाया—तमालिके त्वं तिष्ठ । सखि मदलेखे, एष तेऽञ्जलिः । त्वमेकं मे वचनं कुरु ।

**तरलिका**—एत्थ अय्याए णिवेदेमि देवीए कुमारो ण किं वि उवअरिओत्ति ।

(**छाया**—अत्रार्यायै निवेदयामि देव्या कुमारो न किमप्युपचरित इति ।)

**कादम्बरी**—(आत्मगतम् ) संकडे पडिदम्हि ।

(**छाया**—संकटे पतितास्मि ।)

(सधैर्यम् ) जुवराअ,

(**छाया**—युवराज, )

(इत्यर्धोक्ते वैलक्ष्यं नाटयति)

**चन्द्रापीडः**—(स्वगतम् ) यत्सत्यमनङ्गबलात्कृतोऽपि कुलकुमारीजनः शालीनतया वैयात्यं नालम्बते ।

प्रेमार्द्रचेताः स्पृहयालुरेव
स्निग्धं जनं भाषितुमीक्षितुं च ।
व्यापारमस्याः प्रतिहन्ति लज्जा
कथंचिदप्युद्भवितुं प्रवृत्तम् ॥ ४३ ॥

(प्रकाशम् ) मदलेखे, न खेदनीया देवी ।

**मदलेखा**—समुदाआरमेत्तेण कीरिसो खेदो ।

(**छाया**—समुदाचारमात्रेण कीदृशः खेदः?)

**कादम्बरी**—गच्छामि दाव ।

(**छाया**—गच्छामि तावत् ।)

**तमालिका**—जं हिअए कदुअ आअदा तुमं तस्सिं अणिव्वूढे कहिं गच्छेसि ?

(**छाया**—यं हृदये कृत्वा आगता त्वं तस्मिन्ननिर्व्यूढे कुत्र गच्छसि ?)

**कादम्बरी**—(सासूयम् अपवार्य) को मे मणोरहो ?

(**छाया**—को मे मनोरथः ?)

**तमालिका**—न कोवि अण्णो । एसो एव्व जुवराओ ।

(**छाया**—न कोऽप्यन्यः । अयमेव युवराजः ।)

**चन्द्रापीडः**—देवि विस्रब्धा भव । अतः परं किमुपचर्यते । पश्य,

विलोकयितुमाननं मधुरहासमुग्धं तव
प्रसादमुपलब्धुमप्यनितरोपभोगोचितम् ।
इमाममृतसंमितामपि गिरं निपातुं मया
गते जनुषि किं कृतं सुकृतमित्यहं विस्मितः ॥ ४४ ॥

**कादम्बरी**—(मदलेखां प्रति, अपवार्य) हला, कहं तुमं वि एणां वक्कभासिणीं तमालिआं अणुवट्टसि ?

(**छाया**—हला, कथं त्वमपि एनां वक्रभाषिणीं तमालिकामनुवर्तसे ?)

**मदलेखा**—कुमार, एसा देवी विण्णवेदि विअग्घो खु जुवराओ अहोदं वि गुणं आरोविअ उत्तिभङ्गीहिं उवलालिदुं सहीअणंति ।

(**छाया**—कुमार, एषा देवी विज्ञापयति विदग्धः खलु युवराजः अभूतमपि गुणमारोप्योक्तिभङ्गीभिरुपलालयितुं सखीजनमिति ।)

**चन्द्रापीडः**— मा मैवम् ;

कुले गन्धर्वाणां जनिरनुपमो रूपविभवः
कलासु प्रागल्भ्यं किमपि मधुरं यौवनमिदम् ।
सुजातं सौभाग्यं प्रकृतिसरसं सौहृदमपि
ध्रुवं त्वय्येवायं निवसति समस्तो गुणगणः ॥ ४५ ॥

**कादम्बरी**—(सलज्जमवनतमुखी तिष्ठति)

**केयूरकः**—(स्वगतम्) महत् खलु वैलक्ष्यं गन्धर्वराजकन्यायाः । अवतरणीयं प्रसङ्गान्तरम् । (प्रकाशम्) अवधारयतु देवः—

श्वेतच्छत्रमिदं प्रसूनधनुषः शङ्खो वियद्वारिधेः
पूर्वक्ष्माधरसौधशृङ्गकलशः प्राचीवधूदर्पणः ।
नाकौकःपरिषत्सुपीतचषकं ज्योत्स्नालतायाः फलं
सूते लोचनयोः सुखानि सुतरां तारापतेर्मण्डलम् ॥ ४६ ॥

**चन्द्रापीडः**—(निरूप्य) मन्ये स्थानाभिनिवेशिता नाम निसर्गो निर्मलात्मनाम् । यतः—

कण्ठे मुक्ताकलापच्छविमुरसिजयोश्चन्दनालेपशोभा-
मोष्ठे मन्दस्मिताभां श्रवणपरिसरे दत्तताटङ्कशङ्काम् ।
फाले कर्पूरलेखारुचिमलकचये मल्लिकाकारलीलां
धत्ते देव्याः कपोले शशिकिरणकरो लोध्रचूर्णानुकारम् ॥४७॥

कादम्बरी—(स्वगतम्) हिअअ तदा खु सोहइ दे वल्लह-जणदंसणलाहमेत्तेण संमोदो, जइ पच्चा ण तारिसी उक्कण्ठा ।

(छाया—हृदय, तदा खलु शोभते ते वल्लभजनदर्शनलाभमात्रेण संमोदः, यदि पश्चान्न तादृशी उत्कण्ठा ।)

(प्रविश्य पटाक्षेपेण)

विजया—एसा आगआ ।

(छाया—एषा आगता ।)

कादम्बरी—(सावेगम्) का?

विजया—अय्या महासेदा ।

(छाया—आर्या महाश्वेता ।)

मदलेखा—कहिं वट्टइ?

(छाया—कुत्र वर्तते?)

विजया—सिरिमण्डपम्मि भट्टिदारिआं पडिवालअन्ती चिट्ठइ ।

(छाया—श्रीमण्डपे भर्तृदारिकां प्रतिपालयन्ती तिष्ठति ।)

केयूरकः—प्रायः संवेशवेलेति काल्य एव दिदृक्षते देवम् ।

कादम्बरी—(स्वगतम्) ण खु अण्णहा किं वि चिंतेदि सअं एव्व से उवआरणिओइणी महासेदा । तह वि किं करेमि दुक्खरपडिण्णाणिव्वहणपडिहअमणोरहा मन्दभाइणी । (प्रकाशम्) मअलेहे गच्छम्ह ।

(छाया—न खलु अन्यथा किमपि चिन्तयेत् स्वयमेवास्योपचारनियोजनी महाश्वेता। तथापि किं करोमि दुष्करप्रतिज्ञानिर्वहणप्रतिहतमनोरथा मन्दभागिनी। मदलेखे गच्छामः।)

तमालिका—णं कुमारेण पेसिदव्वासि।

(छाया—ननु कुमारेण प्रेषयितव्यासि।)

कादम्बरी—सहि, विण्णवेहि राअउत्तं अय्या महासेदा दट्ठव्वेत्ति।

(छाया—सखि, विज्ञापय राजपुत्रमार्या महाश्वेता द्रष्टव्येति।)

मदलेखा—जुवराअ, अणुजाणाहि देवीं अणुवट्टणस्स अय्याए।

(छाया—युवराज, अनुजानीहि देवीमनुवर्तनायार्यायाः।)

चन्द्रापीडः—अर्हति कुमुद्वती निशीथिनीमुपच्छन्दयितुम्।

कादम्बरी—(स्वगतम्) कथं गमिस्सिस्सं इमं परिच्चइअ? अहवा एसो मे हिअअम्मि वट्टइ एव।

(छाया—कथं गमिष्यामीमं परित्यज्य? अथवा एष मे हृदये वर्तत एव।)

(इति ससखीजना निष्क्रान्ता)

चन्द्रापीडः—(स्वगतम्) हन्त! कथमतिक्रान्तैव नयनगोचरं मत्तकाशिनी। (उपसृत्य)

निवृत्तेयं वरारोहा तापाय पुरतोऽपि मे।
अनागता वरं वृष्टिर्न त्वागत्याचिराद्गता॥ ४८॥

(विषादं नाटयति)

**केयूरकः**—अतः परं देवोऽपि निद्रासुखमनुभवितुमर्हति ।

**चन्द्रापीडः**—(उत्थाय) केयूरक, शय्यागृहमार्गमादेशय ।

**केयूरकः**—इत इतो देवः ।

**चन्द्रापीडः**—(परिक्रामति)

**केयूरकः**—इत इतो निद्रागृहम् । अत्र च,

उन्मीलन्मणिपङ्क्तिदीपविलसन्मुक्तावितानावली-
स्वेच्छावल्गिततालवृन्तमभितो भृङ्गारशृङ्गारितम् ।
चञ्चत्काञ्चनशृङ्खलाविलगितप्रेङ्खोलचीनांशुकं
डोलाकल्पमिदं प्रसूनपटलैराकीर्णमालोक्यते ॥ ४९ ॥

**चन्द्रापीडः**—(स्वगतम्) इदमिदानीमाशंसनीयम् ।

देवि प्रसीद निद्रे देहि मम स्वप्नदर्शनं तस्याः ।
साक्षाद्विलोकनैकस्पृहया चैतदुपेक्षते नयनम् ॥ ५० ॥

**(इति निष्क्रान्तौ ।)**

**तृतीयोऽङ्कः ॥**



# चतुर्थोऽङ्कः ।

(प्रविश्य)

**कञ्चुकी** (सनियोगनियन्त्रणोद्वेगम्)—कष्टा खलु सेवा ; विशेषादधिकारः सौविदल्लानाम् ।

तथाहि—

अन्तःप्राप्तिषु संमतोऽप्यसमये निर्भर्त्सनीयो जनः
कर्तव्यं च निरागसां नियमनं शुद्धान्तसंचारिणाम् ।
संभाव्या न दिवा न निश्यपि पुनर्विश्रान्तिरप्यात्मनो
धिक् सौख्यं परकीयमेव न मया स्वीयं च विभ्रंशितम् ॥१॥

तत्कृतमधुना प्रस्तुतार्थविप्रतिषिद्धेनामुना प्रसङ्गेन । नन्वहमादिष्टोऽस्मि महादेव्या मदिरया—आर्य क्षीरोद, जानाति खलु भवान् किंनरमिथुनप्रयोगमारभ्य वत्सायाः प्रतिज्ञामोचने यत्नम् । तदिमं मध्यमलोकराजपुत्रमिन्द्रायुधखुरपुटानुसाराच्चतुर्मुखायतनान्तिकमुपेयुषः स्कन्धावारस्य दर्शनाय गतमिह पुनरानेतुं महाश्वेता प्रयतते न वेति विज्ञायावेदयितुमर्हतीति । तद्यावत्कन्यान्तःपुरमेव गच्छामि । (कतिचित्पदानि गत्वा सदृष्टिक्षेपम्) अये ! देव्याः कादम्बर्याश्चामरग्राहिणीयमिरावती त्वरितपदमितः समापतति । प्रक्ष्यामि तावदेनाम् ।

(उपसृत्य)

(प्रविश्य)

इरावती—अय्य खीरोद, णमो दे।

(छाया—आर्य क्षीरोद, नमस्ते।)

कञ्चुकी—कल्याणिनी भूयाः। किमेवमतिजवं प्रस्थितासि?

इरावती—गन्तव्वं मए लीलावणं।

(छाया—गन्तव्यं मया लीलावनम्।)

कञ्चुकी—किं तत्र?

इरावती—तहिं आणत्तह्मि मअलेहाए हिमघरसंविहाणस्स।

(छाया—तत्राज्ञप्तास्मि मदलेखया हिमगृहसंविधानाय।)

कञ्चुकी—कोऽयमाकस्मिकः समारम्भः?

इरावती—णं सकालणो एव्व।

(छाया—ननु सकारण एव।)

कञ्चुकी—कथय; महता भाव्यं प्रयोजनेन।

इरावती—किं ण सुणिअं अज्जेण भट्टिदारिआ संदावेण उत्तम्मइत्ति।

(छाया—किं न श्रुतमार्येण भर्तृदारिका संतापेनोत्ताम्यतीति।)

कञ्चुकी—श्रुतं मयैतत्। अथ निदानमस्यावगन्तुमिच्छामि।

इरावती—णं मज्झमलोअराअउत्तं (इत्यर्धोक्ते साशङ्कमात्मगतम्) कहं मए एक्कपए रहस्सभेओ कओ?

(छाया—ननु मध्यमलोकराजपुत्रम्। कथं मयैकपदे रहस्यभेदः कृतः ?)

**कञ्चुकी**—(विभाव्य) अलमेकदेशविभावनीयेऽत्र निह्नवेन।

**इरावती**—(स्वगतम्) एसो वि गहीरहिअओ एव्व। ता किं से ण णिवेइज्जइ ? (प्रकाशम्, स्मितं कृत्वा) णं तं महाभाअं उद्दिसिअ उक्कण्ठिआवि भट्टिदारिआ अत्तणो पडिण्णं णिव्वहिउं पिअसहीणं वि अणावेइअमणोरहा मम्महजरेण किलम्मइ।

(छाया—एषोऽपि गभीरहृदय एव। तत् किमस्य न निवेद्यते ? ननु तं महाभागमुद्दिश्य उत्कण्ठितापि भर्तृदारिका आत्मनः प्रतिज्ञां निर्वोढुं प्रियसखीनामप्यनावेदितमनोरथा मन्मथज्वरेण क्लाम्यति।)

**कञ्चुकी**—अस्ति किमनुरागचिह्नमस्यापि ?

**इरावती**—कहिं वा उवेक्खिज्जइ जोण्हिणी चन्देण ?

(छाया—कथं वोपेक्ष्यते ज्योत्स्ना चन्द्रेण ?)

**कञ्चुकी**—अथ कथमकृतार्थ एव प्रस्थितोऽयम् ?

**इरावती**—णं महासेदाए एव्व पच्चासण्णेण राअसेण्णेण अस्समोवरोहो ण होदुत्ति गन्धव्वकुमारएहिं सह पेसिओ एसो।

(छाया—ननु महाश्वेतयैव प्रत्यासन्नेन राजसैन्येनाश्रमोपरोधो मा भूदिति गन्धर्वकुमारैः सह प्रेषित एषः।

**कञ्चुकी**—तत्कया नु प्रतिपत्त्या इमं महाश्वेतानिनीषते ?

**इरावती**—दाणिं एव्व खु पाहुअसणाहपाणी केऊरओ पेसिओ महासेदाए अस्सत्थसरीरा देवित्ति तं एत्थ आणेदुं सुहअसेहरम् ।

(**छाया**—इदानीमेव खलु प्राभृतसनाथपाणिः केयूरकः प्रेषितो महाश्वेतया अस्वस्थशरीरा देवीति तमत्रानेतुं सुभगशेखरम् ।)

**कञ्चुकी**—(स्वगतम्) श्रुतं श्रोतव्यम् । किमतः परं कन्यान्तःपुरप्रवेशेन ? (प्रकाशम्) औपयिकोऽयं प्रयत्नः । पश्य,

गुणातिशयपेशले यदभिलाषबन्धो जने
रुचिर्निजमनोरथानुगुणमेव तस्यापि यत् ।
अविघ्नमनयोश्च यद्व्यतिकरस्तदेतद्ध्रुवं
फलं सुकृतशाखिनो न खलु सर्वसाधारणम् ॥ २ ॥

साधयतु भवती ।

(**इरावती निष्क्रान्ता**)

**कञ्चुकी**—यावदहमपि भाविजामातुश्चन्द्रापीडस्य प्रतिनिवृत्तिप्रसङ्गं गन्धर्वराजकुटुम्बिन्यै निवेदयामि ।

(**इति निष्क्रान्तः**)

---

**मिश्रविष्कम्भः ।**



(ततः प्रविशति सिंहासनाधिरूढश्चन्द्रापीडो विदूषकः पत्रलेखा परिजनश्च ।)

**चन्द्रापीडः**—(स्वगतम्)

सा चापि काञ्चनलतेव सजीवयोगा
सौदामिनीव भुवि संचरितुं प्रवृत्ता ।
अन्येव पुष्पधनुषो जयवैजयन्ती
संदर्शनात्प्रभृति मे न जहाति चेतः ॥ ३ ॥

किंतु,

तद्वक्त्रं मम तृप्तये नयनयोस्तापाय तारापति-
स्तच्चक्षुर्मनसो मुदे विदलनायास्त्राणि चेतोभुवः ।
तद्वाणी धृतये भृशं श्रवणयोः खेदाय वीणाध्वनि-
र्वैषम्यं सदृशेऽपि वस्तुनि विधेरुद्भाव्यते वैशसात् ॥४॥

**पत्रलेखा**—(आत्मगतम्) जो अह्माणं णिवेइओ जुवराएण हेमऊडवुत्तन्तो णूणं दाणिं वि तग्गअमणेण इमिणा होदव्वम् ।

**(छाया—योऽस्माकं निवेदितो युवराजेन हेमकूटवृत्तान्तः नूनमिदानीमपि तद्गतमनसानेन भवितव्यम् ।)**

**चन्द्रापीडः**—(स्वगतम्) हन्त ! कथमसुलभजनानुरागदुर्ललितं हतहृदयं नालमस्मि वारयितुम् । (विमृश्य) अथवा, स्थान एवायमभिनिवेशोऽस्य । तथाहि—

ताम्बूलदानसमये वलयावपातः
प्रासादमूर्ध्नि सविलासविलोकनानि ।

अव्यावहारिककथासु विलक्षभाव-
स्तस्याः कथं न कथयन्ति मनोभवार्तिम् ॥ ५ ॥

**विदूषकः**—ईरिसं खु गौरवं पभूणं अस्सिदजणेसु, जं एस वअस्सो ताए गन्धव्वराअकण्णआए दंसणं आरहिअ सखिणा मए आलावंवि ण करेदि ।

(छाया—ईदृशं खलु गौरवं प्रभूणामाश्रितजनेषु, यदेष वयस्यः तस्या गन्धर्वराजकन्यकाया दर्शनमारभ्य सख्या मया आलापमपि न करोति ।)

**पत्रलेखा**—मुक्ख दमिलधम्मिअ, किं असंबद्धाइं उवण्णस्ससि ? णं कज्जसहस्सपज्जाउलाइ राअहिअआइ ।

(छाया—मूर्ख द्रमिडधार्मिक, किमसंबद्धान्युपन्यस्यसि ? ननु कार्यसहस्रपर्याकुलानि राजहृदयानि ।)

**चन्द्रापीडः**—पत्रलेखे, निपुणमुत्प्रेक्षिता मे मनोवृत्तिः ।

**विदूषकः**—(सगर्वम्) ण खु अभूमी मे बुद्धिविहवस्स । ता वअस्स, वाचक्खेहि अवक्खोहकालणं हिअअस्स । णं एसा एत्तिएण मं बहुमण्णिस्सदि ।

(छाया—न खल्वभूमिर्मे बुद्धिविभवस्य । तत् वयस्य, व्याचक्ष्वावक्षोभकारणं हृदयस्य । नन्वेषा एतावता मां बहुमंस्यते ।)

**चन्द्रापीडः**—किमपरं मया विचिन्त्यते ?

महाश्वेतायास्तत्सरलहृदयत्वं निरुपमं
तथा कादम्बर्याः प्रणयरमणीया बहुमतिः ।
सखीनामन्यासामपि विनयचातुर्यगरिमा
प्रकामं मे चेतः प्रमदयति संमोहयति च ॥ ६ ॥

**पत्रलेखा**—अणण्णसामण्णं खु ताणं सुजणत्तणं जाणं परोक्खेवि पुणो पुणो देवेण एव्वं सलाहमुहलेण भविज्जइ ।

(छाया—अनन्यसामान्यं खलु तासां सुजनत्वं यासां परोक्षेऽपि पुनः पुनः देवेनैवं श्लाघामुखरेण भूयते ।)

**चन्द्रापीडः** (स्वगतम्)—

भूत्वा तदा हृदय धैर्यवता त्वयैव
वामभ्रुवः परिसरादपवाहितोऽस्मि ।
वैयाकुली भवति नौपयिकी तवेयं
त्वामेष संप्रति कथं नु विनोदयेयम् ॥ ७ ॥

( नेपथ्यार्धप्रविष्टा )

**प्रतिहारी**—जुवराअ, एसो कोवि गन्धव्वकुमालओ आसण्णपडिहारो विण्णवेदि—देवस्स दंसणसुहं कहं लहेयंति ।

(छाया—युवराज, एष कोऽपि गन्धर्वकुमारक आसन्नप्रतीहारो विज्ञापयति—देवस्य दर्शनसुखं कथं लभेयेति ।)

**चन्द्रापीडः**—नूनं स एष केयूरकः, यो देव्याः प्रत्यासन्नपरिचारको मयावेदितः । सौदामिनि, प्रवेशयैनम् ।

**प्रतिहारी**—जं जुवराओ आणवेदि ।

(छाया—यद्युवराज आज्ञापयति ।)

( इति निष्क्रान्ता )

(प्रविश्यात्मना तृतीयः)

केयूरकः—विजयतां देवः ।

चन्द्रापीडः—केयूरक, इतस्तावत् ।

केयूरकः—(उपविशति)

चन्द्रापीडः—अपि कुशलं देव्याः ?

केयूरकः—कथं न वार्तं तस्य जनस्य, यत्रैवमुपदर्शितप्रसादो युवराजः । ( परिवृत्य ) सखायौ किंशुककिंकिरन्तौ, दर्शयतं देव्या स्वहस्तप्रेषितान्यभिज्ञानानि ।

विदूषकः—णूणं खण्डमोदआइंति तक्केमि ।

(छाया—नूनं खण्डमोदकानीति तर्कयामि ।)

चन्द्रापीडः—सर्वत्र द्विजबन्धोराद्यूनता ।

पुरुषौ—(मृणालसूत्रमुद्रितमुखं कमलपत्रसंपुटमुद्घाट्य) इमाइ विरहवेअणाविहुरवरवहूगण्डपाण्डराइ तम्बूलदलाइ । इदं सरस्समअप्पसण्णणक्खत्तविब्भमं घणसारखण्डम् । एदं च सोरहविसेसवासिअदिसामुहं सिरिखण्डविलेवणम् ।

(छाया—इमानि विरहवेदनाविधुरवरवधूगण्डपाण्डराणि ताम्बूलदलानि । इदं शरत्समयप्रसन्ननक्षत्रविभ्रमं घनसारखण्डम् । एतच्च सौरभविशेषवासितदिशामुखं श्रीखण्डविलेपनम् ।)

केयूरकः—(आदाय, सोपग्रहम्) देव, प्रतिग्रहीतव्योऽयमुपहारः । (इत्यर्पयन्) संदिष्टं च देव्या महाश्वेतया ।

चन्द्रापीडः—किमाज्ञापयत्यार्या ?

केयूरकः—

ईदृशमनुभावयितुं मन्ये तव विरहदर्शनक्लेशम् ।
बत ददसे स्म निमेषं तादृशमवलोकनसुखं नः ॥ ८ ॥

किंच, न जानीमो निमित्तं यदा भवान्निर्गतस्तदा प्रभृति बलवदस्वस्थदेहा देवी कादम्बरी । तन्महाभागेनैकवारं प्रतिनिवृत्त्यास्मासु प्रदर्शनीयः प्रसादः । क्षन्तव्यं चेदमनुचितं संदेशधाष्टर्यमिति ।

विदूषकः—(अपवार्य) कहं आआसिज्जइ वअस्सो हेमऊडगआगअेण ?

(छाया—कथमायास्यते वयस्यो हेमकूटगतागतेन ?)

चन्द्रापीडः—(स्वगतम्) अये ! किमपि सोद्वेदमुपन्यस्तं महाश्वेतया ।

केयूरकः—उपालब्धश्च देवो मदलेखाप्रमुखेन सखीजनेन ।

चन्द्रापीडः—(सकौतुकम्) कथमिव ?

केयूरकः—

मुग्धमहिलाप्रलोभनमयुक्तरूपं सुमानुषस्यैतत् ।
निःशङ्कमेव सख्याश्चोरेणेव त्वया हृतं चेतः ॥ ९ ॥

पत्रलेखा—णिउणो उवालम्भो ।

(छाया—निपुण उपालम्भः ।)

विदूषकः—(जनान्तिकम्) वअस्स, किं दाणिं वि अपरितोसो ?

(छाया—वयस्य, किमिदानीमप्यपरितोषः ?)

**चन्द्रापीडः**— (स्वगतम्)

स्थाने तवाभिलाषो हृदय समाश्वसिहि वर्धसे दिष्ट्या ।
प्रतिफलति सहचरीणां वचनेषु मनीषितं भवतः ॥ १० ॥

(प्रकाशम्) केयूरक, कथय । प्रस्थिते मयि किं विनोदनं देव्याः ? विद्यते वा कदाचित् प्रसङ्गो जनस्यास्य ?

**केयूरकः**—कथमवधारितं देवेन ?

यतस्त्वां प्रासादात्कथमपि तथा प्रेषितवती
वहन्ती विच्छायं वदनमथ तत्रैव सुचिरम् ।
कियद् दूरं यातस्त्वमिति नियतं वीक्षितुमसौ
गवाक्षे दीर्घाक्षी न्यधित दृशमुद्बाष्पकणिकाम् ॥ ११ ॥

**पत्रलेखा**—(अपवार्य) अच्चारूढो खु अणुराओ गन्धव्वरा-अवुत्तीए ।

(**छाया**—अत्यारूढः खल्वनुरागो गन्धर्वराजपुत्र्याः ।)

**केयूरकः**—तिरोहितदर्शने च देवे ततोऽवतीर्य क्रीडापर्वत-कमारूढा । तत्र च,

अत्रास्थाने किल विरचिता तेन संगीतगोष्ठी
सायं दृष्टः समजनि लतामण्डपेऽस्मिन् स भूयः ।
सेवास्माकं गृहकुमुदिनीसीम्नि तस्यात्र लब्धे-
त्यालापेनाखिलमपि दिनं यापयत्येव देवी ॥ १२ ॥

**विदूषकः**—(पत्रलेखां प्रति अपवार्य) साहु संवुत्तम् । णूणं वअस्सो विअ सावि उक्कण्ठिदा ।

(छाया—साधु संवृत्तम् । नूनं वयस्य इव सापि उत्कण्ठिता ।)

**केयूरकः**—प्रत्युषसि च मे कथितं मदलेखया ;

आहारे न रुचिर्यथापुरमभिप्रीतिर्न संगीतके
नासङ्गः परिहासकेलिषु सखीवर्गेषु नैवादरः ।
तस्याः केवलमेव मीलितदृशश्चेलाञ्चलेनाननं
शय्यायामवकुण्ठ्य खिन्नमनसो याता क्षयं यामिनी ॥

दाहज्वरश्च महान् जृम्भत इति ।

**चन्द्रापीडः**—(स्वगतम्) दिष्ट्या किंचिदवशिष्टममुना निवेदिता देव्याश्चित्तस्थितिः । तदपि स्वयमविमृशतो मे न विस्रम्भः ।

(प्रकाशम्)

अवश्यमस्वस्थशरीरवृत्ति-
रवेक्षणीयैव मयाद्य देवी ।
उपेक्षते कः खलु पुष्पमालां
घर्मोष्मणा मर्मरतां भजन्तीम् ॥ १४ ॥

**पत्रलेखाविदूषकौ**—जुत्तं तारिसस्य सहिअत्तणस्स ।

(छाया—युक्तं तादृशस्य सख्यस्य ।)

चन्द्रापीडः—ननु युवामपि कुतूहलिनौ देवीं कादम्बरीं द्रष्टुम्?

उभौ—जइ जुवराओ अह्मेवि मानेदुं इच्छइ।

(छाया—यदि युवराज आवामपि मानयितुमिच्छति।)

चन्द्रापीडः—(परिजनं प्रति) निवेदयास्मानितो हेमकूटं व्रजतः कार्यासनस्थितायामात्यवैशम्पायनाय।

(परिजनः तथेति निष्क्रान्तः)

चन्द्रापीडः—(उत्थाय) केयूरक, दर्शयतु भवानग्रतः सरणिम्।

केयूरकः—

अच्छोदं नवपद्मरेणुमुकुलेनोल्लङ्घ्य तीराध्वना
पश्चाच्चैत्ररथं विगाह्य परितो विश्रान्तसिद्धाध्वगम्।
आरुह्याथ च हेमकूटमचलं सोपानपङ्क्त्यानया
गन्धर्वाधिपतेः प्रविश्य नगरीं सोल्लासमागम्यताम्॥ १५॥

(सर्वे परिक्रामन्ति)

चन्द्रापीडः—(स्वगतम्)

स्वप्नोपलब्धमपि मे स्वदते यस्या विलोकनं मनसः।
तामेव पुनरपि दृशा पश्यामि कुरङ्गशावदृशम्॥१६॥

केयूरकः—इदं तावत्कन्यान्तःपुरगोपुरम्।

(सर्वे प्रवेशं नाटयन्ति)

पत्रलेखा—(परितो विलोक्य) अदिसइअसुरासुरं खु अइस्सरिअं गन्धव्वराअस्स ।

(छाया—अतिशयितसुरासुरं खलु ऐश्वर्यं गन्धर्वराजस्य ।)

विदूषकः-(जनान्तिकम्) सरिसो संबन्धिओ महाराअचित्तरहो ।

(छाया—सदृशः संबन्धी महाराजचित्ररथः ।)

(नेपथ्ये)

ह्रीबेरैः क्रियतां वृतिर्हिमजलैरासिच्यतां मेदिनी
कल्प्यन्तां हिमवालुकामलयजैः शय्योचिता वेदिका ।
आर्द्रक्षौमवितानकं च कदलीस्तम्भेषु विस्तार्यतां
बध्यन्तामपि जालकान्यभिनवैरम्भोजिनीपल्लवैः ॥ १७ ॥

किंच,

श्रीकण्ठद्रवशीतलान् शशिशिलापट्टान् सखि स्थापय
प्रत्यग्रैः कलयालि केलिशयनं कल्हारगर्भच्छदैः ।
नीहाराम्बुनदीषु निक्षिप हला भूषामृणालाङ्कुरान्
गाढोज्जृम्भितसंज्वरा हिमगृहं प्राप्तैव कादम्बरी ॥ १८ ॥

केयूरकः—इयं भर्तृदारिकायाः पुरोयायिनो जनस्योद्घोषणा ।

चन्द्रापीडः—किंनिमित्तोऽयमस्याः कादम्बर्याः संतापो भवेत् ?

**केयूरकः**--युवराज, इतो लीलावनान्तरालवर्त्मना हिमगृहं प्रविश्य संभाव्यतां देवी। यावदहमपि परिसमापितनियमां महाश्वेतां ज्ञात्वा आगच्छामि।

(इति निष्क्रान्तः)

**पत्रलेखा**—जुवराअ, किं एदं पुञ्जीकिदं विअ मरगअरअण-जालं पुरो दीसइ ?

(**छाया**—युवराज, किमेतत् पुञ्जीकृतमिव मरकतरत्नजालं पुरो दृश्यते?)

**चन्द्रापीडः**--नूनमिदं नूतनकदलीदललाञ्छनं हिमगृहं देव्याः।

**विदूषकः**--ता पविसदु भवं।

(**छाया**—तत् प्रविशतु भवान्।)

(सर्वे प्रवेशं नाटयन्ति)

**चन्द्रापीडः**--(समन्तादवलोक्य) अहो! शिशिरोपचारसामग्री-संविधानचातुर्यम्।

क्रोडत्कृत्रिमहंसपक्षचलनैश्च्योतन्ति पाथःकणाः
पाणिभ्यां बिसतन्तुचामरमितो धून्वन्ति पाञ्चालिकाः।
मायावारिधरः करोति शिखिनः केकारवोत्कण्ठितान्
मिथ्याशाद्वलितासु भूमिषु मृगाः संचारमातन्वते ॥ १९ ॥

**पत्रलेखा**—लिम्पज्जइ विअ हिमघरं हिअअं वि तुसारपूरेहिं।

(**छाया**—लिप्यत इव हिमगृहं हृदयमपि तुषारपूरैः।)

**विदूषकः**—(शैत्याभिभवमभिनीय) हद्धि हद्धि, पुरदो हिमसीदालूणि संकुअन्ति विअ दाणिं अङ्गाइ।

(छाया—हाधिक्, हाधिक्, पुरतो हिमशीतालूनि संकुचन्तीवेदानीमङ्गानि ।)

**चन्द्रापीडः**—आश्चर्यमाश्चर्यम् ! यदयमितरेतरविरुद्धानामपि युगपदेकत्र संपातः सकलशैत्यानाम् ।

क्वचिज्ज्योत्स्नापूरः प्रभवति सुधासारशिशिरः
क्वचिन्नीपामोदप्रसरसुहृदो वान्ति मरुतः ।
क्वचिद्भूयः श्यानीभवति च हिमानीयमभित-
स्तदेतत्सामग्र्यं न भुवि भुवने वा दिविषदाम् ॥ २० ॥

**विदूषकः**—अह को उण इमो मिउलकअलीगब्भपत्तपज्जन्तपरिहाणो सिसिरअरचन्दणरसाणुलित्तसव्वङ्गो मिलानमिणालवलअविलुलिअमणिबन्धणोदरफुल्लमल्लिआमुउलमालाकलिअललिअमोन्तावलिविलासो इत्थिआसंघो ?

(छाया—अथ कः पुनरयं मृदुलकदलीगर्भपत्रपर्याप्तपरिधानः शिशिरतरचन्दनरसानुलिप्तसर्वाङ्गो म्लानमृणालवलयविलुलितमणिबन्धनोदरफुल्लमल्लिकामुकुलमालाकलितललितमुक्तावलिविलासः स्त्रीसंघः ?)

**चन्द्रापीडः**—नूनमयं देव्याः शिशिरोपचारनियुक्तः परिजनः ।

**पत्रलेखा**—जुवराअ, इदो का उण एसा सहीहिं विरइअतावपडिआरा दीसइ ?

(छाया—युवराज, इतः का पुनरेषा सखीभिर्विरचिततापप्रतीकारा दृश्यते ?)

**चन्द्रापीडः**—(दृष्ट्वा) अये ! लब्धमाश्वासनं नयनयोः । पत्रलेखे, इयं हि सा चैत्ररथी ;

किसलयशयनीये स्रस्तधाम्मिल्लभारा
विलुठति वलमानैरङ्गकैरायताक्षी ।
श्लथमधुकरमौर्वीबन्धना चापयष्टि-
र्मणिमय इव पीठे स्थापिता मन्मथेन ॥ २१ ॥

पत्रलेखा—ण खु बहुभासिअं जुवराएण से रूवविसेस-वण्णणेसु ।

(छाया—न खलु बहुभाषितं युवराजेनास्या रूपविशेषवर्णनेषु ।)

विदूषकः—कहं एआरिसं इत्थिआरअणं दट्ठूण मम्महवसं ण गच्छइ वअस्सो ?

(छाया—कथमेतादृशं स्त्रीरत्नं दृष्ट्वा मन्मथवशं न गच्छति वयस्यः ?)

चन्द्रापीडः—(विभाव्य) कथमियमन्यादृशी दृश्यते ? अस्याः खलु,

आलेख्यार्पितचञ्चरीकमिथुनप्रस्पर्धिनी लोचने
पद्मस्यानतिमीलितस्य वदनं प्राप्नोति पर्यायताम् ।
घर्माघ्रातमृणालदुर्बलतरे स्रस्तालसे दोर्लते
किं वान्यत् प्रतिपत्कृशां शशिकलामन्वेति तस्यास्तनुः ॥२२॥

पत्रलेखे, सांप्रतमितो राजस्तम्भावारितेन निशमयितव्यो मयास्या रहस्यसंलापः ।

पत्रलेखा—जं अहिमदं देवस्य ।

(छाया—यदभिमतं देवस्य ।

(सर्वे तथा तिष्ठन्ति)

(ततः प्रविशति यथानिर्दिष्टा कादम्बरी, सख्यौ च)

कादम्बरी—हला, केण एदं अलीअं मन्तिदं जं सो राअउत्तो पडिणिवुत्तोत्ति ?

(छाया—हला, केनेदमलीकं मन्त्रितं यत्स राजपुत्रः प्रतिनिवृत्त इति ?)

मदलेखा—ण खु मिच्छा विण्णवेदि परिअणो।

(छाया—न खलु मिथ्या विज्ञापयति परिजनः।)

चन्द्रापीडः—कोऽयमेवं प्रियदर्शनो देव्याः ?

विदूषकः—तुमं विणा को अण्णो इमस्स विसओ पसङ्गस्स ?

(छाया—त्वां विना कोऽन्योऽस्य विषयः प्रसङ्गस्य ?)

कादम्बरी—ता कुदो दाणिं वि ण दीसइ सो ?

(छाया—तत्कुत इदानीमपि न दृश्यते सः ?)

तमालिका—सिरिमण्डपम्मि सणिअमं महासेदं पेक्खिदुं विलम्बेदित्ति तक्केमि।

(छाया—श्रीमण्डपे सनियमां महाश्वेतां प्रेक्षितुं विलम्बत इति तर्कयामि।)

मदलेखा—सुदं मए कअलीवणं पविट्ठोत्ति।

(छाया—श्रुतं मया कदलीवनं प्रविष्ट इति।)

पत्रलेखा—सव्वहा देवं एव्व अणुबन्धेदि पसङ्गो।

(छाया—सर्वथा देवमेवानुबध्नाति प्रसङ्गः।)

**कादम्बरी**—(संतापातिशयमभिनयन्ती) हला, अदिसइदो मे हिअअसंदावो।

(छाया—सखि, अतिशयितो मे हृदयसंतापः।)

**मदलेखा**—भट्टिदारिए, विलुलिओ एसो पवालतप्पओ। ता उट्ठेहि। णिसीदेहि अहिदो चन्दमणिपुत्तिआकरसंपुडरहसोद्देल्लनखणणीदचन्दणरसमिलिदहिमच्छडासारसविसेससीअलाइदम्मि जन्तधाराजलबिन्दुणिअरणिस्सन्ददुद्दिणोल्लसिअसेआणुबन्धसंभरिअमरगअमणिविब्भम्मि फडिअसिलापट्टओवरिपतन्तपडिणवकप्पूरकअलिआगब्भसरिसम्मि रत्तपाडलकुसुमपडलसिलातलम्मि।

(छाया—भर्तृदारिके, विलुलित एष प्रवालतल्पकः। तदुत्तिष्ठ। निषीद अभितश्चन्द्रमणिपुत्रिकाकरसंपुटरभसोद्वेल्लनक्षणनीतचन्दनरसमिलितहिमच्छटासारसविशेषशीतलायिते यन्त्रधाराजलबिन्दुनिकरनिष्यन्ददुर्दिनोल्लसितसेकानुबन्धसंभृतमरकतमणिविभ्रमे स्फटिकशिलापट्टकोपरिपतत्प्रतिनवकर्पूरकदलिकागर्भसदृशे रक्तपाटलकुसुमपटलशिलातले।)

**कादम्बरी**—कीस मं एव्वं पुणो पुणो कअत्थेसि णिरत्थएहिं वावारेहिं?

(छाया—किमिति मामेवं पुनः पुनः कदर्थयसि निरर्थकैर्व्यापारैः?)

(इति शनैरुत्थाय निषीदति)

**चन्द्रापीडः**—नितरां खलु निःसहशरीरत्वमेतस्याः। तथाहि—

करकिसलयेनालम्ब्यैकेन संनिहितां सखीं
विपुलजघनान्नीवीमन्येन संदधती श्लथाम् ।
स्तनभरनता विन्यस्यन्ती पदानि शनैः शनैः
कथमपि गता तल्पात्तल्पं चिरेण तलोदरी ॥ २३ ॥

मदलेखा—तमालिए, एहि । वीजय पिअसहीं सिसिरअरोसीरवासणासुरहिअहिमबिन्दुवाहिणा णिम्मलमिणालदण्डेन णलिणीपलासतालउन्तेण । अहं वि एदाए णअणेसु अलिअलेहाए पाणिपादेसु हिअअम्मि वि णिसिञ्चामि चन्दमणिसिलागलन्तिआहरिअं तुसारजलं ।

(छाया—तमालिके, एहि । वीजय प्रियसखीं शिशिरतरोशीरवासना-सुरभितहिमबिन्दुवाहिना निर्मलमृणालदण्डेन नलिनीपलाशतालवृन्तेन । अहमपि एतस्या नयनयोः अलिकलेखायां पाणिपादे हृदये च निषिञ्चामि चन्द्रमणिशिलागलन्तिकाहृतं तुषारजलम् ।)

कादम्बरी— सहीओ, अवणेह इमाइं अदिसइदसंदावकारणाइं रअणतवणीअभूसणाइं ।

(छाया—सख्यः, अपनयतेमानि अतिशयितसंतापकारणानि रत्नतपनीयभूषणानि ।

तमालिका—मअलेहे, तह करेहि । धरावेहि पिअसहीं किसलअमिणालघनसारसअलेहिं सिसिरोवआरसमुइअं वेसं ।

(छाया—मदलेखे, तथा कुरु । धारय प्रियसखीं किसलयमृणालघन-सारशकलैः शिशिरोपचारसमुचितं वेषम् ।)

तमालिका—(नाट्येन तथा करोति)

चन्द्रापीडः—

अर्धक्रान्तमृणालहारवलयैरावेष्ट्यमानैः क्षणा-
दाश्यानीभवदार्द्रचन्दनरसैरङ्गैरमन्दज्वरैः ।
अन्तस्तापमतीव जृम्भितगुणं व्यक्तीकरोत्येव मे
कामार्ता किमसौ न वेति हृदयं डोलायते केवलम् ॥२४॥

पत्रलेखा—ण एत्थ अवआसो संसअस्सवि । अण्णहा कहिअं अण्णूणदाए लावण्णलेहाए ।

(छाया—नात्रावकाशः संशयस्यापि । अन्यथा कथितमन्यूनतया लावण्यलेखायाः ।)

चन्द्रापीडः—(साशंसमात्मगतम्)

उद्दिश्य मामियं स्याद्दूरतनुरपि नाम कामतापार्ता ।
अग्रेसरेण संप्रति सौभाग्यवतां मयैव जायेत ॥ २५ ॥

सख्यौ—(अन्योन्यमवलोक्य) अम्हो पडिण्णाणिब्बन्धो पिअसहीए ; जदो ईरिसावत्थाणेवि ण णिवेदेदि णो हिअअगअं । ता एत्थ अवसरे अम्हेहिं एव्व जुत्तकारिणीहिं होदव्वं ।

(छाया—अहो प्रतिज्ञानिर्बन्धः प्रियसख्याः ; यत ईदृशावस्थानेऽपि न निवेदयति नो हृदयगतम् । तदत्रावसरेऽस्माभिरेव युक्तकारिणीभिर्भवितव्यम् ।)

(प्रविश्य पटाक्षेपेण)

**केयूरकः**—कथमयमपवारितो वर्तते देवश्चन्द्रापीडः । (उपसृत्य) समागतैवेयं परिसमापितनियमा महाश्वेता । तावत् देवीं कादम्बरीमाश्वासयतु देवः ।

**चन्द्रापीडः**—ननु त्वदागमनमनुपालयद्भिः स्थितमिहास्माभिः । तन्मार्गमादिश ।

**केयूरकः**—इत इतो देवः ।

(सर्वे परिक्रामन्ति ।)

**मदलेखा**—(दृष्ट्वा) लद्धं अस्सासणं सहीए । एसो उवट्ठिदो जुवराओ ।

(**छाया**—लब्धमाश्वासनं सख्या । एष उपस्थितो युवराजः ।)

**कादम्बरी**—(सहर्षसंभ्रममुत्थातुमिच्छति)

**चन्द्रापीडः**—देवि गन्धर्वकुलचन्द्रिके कादम्बरि,

परितापनिःसहमिदं पुरैव कमलदलकोमलं गात्रम् ।
आयासयितुं नार्हस्युपचारनियन्त्रणाभिरलम् ॥ २६ ॥

**केयूरकः**—भर्तृदारिके, इयं सा युवराजस्य प्रसादभूमिः ।

**पत्रलेखा**—(प्रणमति)

**कादम्बरी**—(अपवार्य) जुज्जइ इअं जुवराएण एत्तिअं आगमिदुं ।

(**छाया**—युज्यत इयं युवराजेनैतावदागन्तुम् ।)

**केयूरकः**—अयं च देवस्य सर्वविस्रम्भगोष्ठीसहृदयो ब्राह्मणः ।

**कादम्बरी**—अय्य, वन्देमि ।

(छाया—आर्य, वन्दे ।)

**विदूषकः**—संपुण्णमणोरहा होहि ।

(छाया—संपूर्णमनोरथा भव ।)

**मदलेखा**—एदं घणसारवेदिअं अलंकरेदु कुमारो ।

(छाया—एतां घनसारवेदिकामलंकरोतु कुमारः ।)

(सर्वे यथार्हमुपविशन्ति)

**कादम्बरी**—(केयूरकं प्रति) भो, तुमं अय्यं महासेदं तुवरावेहि जुवराअं उवअरिदुं ।

(छाया—भो, त्वमार्यां महाश्वेतां त्वरयस्व युवराजमुपचरितुम् ।)

**केयूरकः**—(तथेति निष्क्रान्तः)

**चन्द्रापीडः**—(स्वगतम्) विमृशामि तावदुक्तिभङ्ग्या मृगदृशो मनोवृत्तिम् । (प्रकाशम्) सख्यौ मदलेखातमालिके,

(श्लो) कथयतमबलायाः किंनिमित्तोऽयमाधिः

**मदलेखा**—कुमार, तुमं एव्व कारणं णिरूविदुं अरुहसि ।

(छाया—कुमार, त्वमेव कारणं निरूपयितुमर्हसि ।)

**चन्द्रापीडः**—

कलयति खलु खेदं तर्हि सोऽयं जनोऽपि ।

तमालिका—सरिसं दे सहिअभावस्स ।

(छाया—सदृशं तव सहृदयभावस्य ।)

चन्द्रापीडः—

अथ किमिति विधत्ते विप्रतीकारमेषा

सख्यौ—पभवदि एत्थ अहिमदो महाभाओ ।

(छाया—प्रभवत्यत्राभिमतो महाभागः ।)

चन्द्रापीडः—

प्रतिहतिमुपगच्छेदन्यथा मन्मथाज्ञा ॥ २७ ॥

कादम्बरी—(स्वगतम्) कहं णिवेइअं णिवेइज्जिदव्वं जुवराअस्स पिअसहीहिं ।

(छाया—कथं निवेदितं निवेदयितव्यं युवराजस्य प्रियसखीभिः ।)

(नेपथ्ये)

भट्टिदारिए, वारेहि इमं विहंगमावसदं ; परिभविज्जामि इमिणा दुव्विणीदेण ।

(छाया—भर्तृदारिके, वारयेमं विहंगमापशदम् ; परिभाव्ये अनेन दुर्विनीतेन ।

चन्द्रापीडः—(निरूप्य) मदलेखे, किमेतत् ?

मदलेखा—एसा कालिन्दी णाम सारिआ इमस्स परिहासअणामस्स सुअस्स भट्टिदारिआए पाणिग्गहणपुव्वं पडिवाइआ ।

(छाया—एषा कालिन्दी नाम शारिका अस्य परिहासकनाम्नः शुकस्य भर्तृदारिकया पाणिग्रहणपूर्वं प्रतिपादिता।)

**पत्रलेखा**—अह किंणिमित्तो पणअकलहो ?

(छाया—अथ किंनिमित्तः प्रणयकलहः ?)

**मदलेखा**—अज्ज उण एसो कए वि इत्थिआए सह विवित्तम्मि दिट्ठोत्ति ईसालुआ एसा अम्हेहिं अब्भत्थिदावि ण गेण्हइ पसादं।

(छाया—अद्य पुनरेष कयापि स्त्रिया सह विविक्ते दृष्ट इति ईर्ष्यालुरेषा अस्माभिरभ्यर्थितापि न गृह्णाति प्रसादम्।)

**चन्द्रापीडः**—(विदूषकाभिमुखं स्मितं करोति)

**विदूषकः**—सुणिज्जदि कहा एसा भारदवरिसम्मिवि अम्हेहिं। ईरिसं इमं पणअन्तीए एदाए महन्तो खु तावग्गी अणुभविज्जइ।

(छाया—श्रूयते कथैषा भारतवर्षेऽपि अस्माभिः। ईदृशमिमं प्रणयन्त्या एतया महान् खलु तापाग्निरनुभूयते।)

(नेपथ्ये)

रे, नृत्तराजवाल्लभ्याहंकृत ब्रह्मबन्धो, नेयं त्वया प्रतार्या। निपुणेयं वेत्ति वक्रवचनानि। कादम्बरीपरिजनो न शक्यते केनचित् विलोभयितुम्।

**चन्द्रापीडः**—सखे, विरम्यताम्; कुपितः परिहासकः।

**सख्यौ**—भट्टिदारिए, गआ कालिन्दी रोसणा एसा कलहवादं

पिरिच्चइअ। (उत्थाय, पत्रलेखां प्रति) सहि, तुमं वि आअच्छ। उवसमेमो एदाए पणअरोसं।

(छाया—भर्तृदारिके, गता कालिन्दी रोषेणैषा कलहवादं परित्यज्य।) सखि, त्वमप्यागच्छ। उपशमयामोऽस्याः प्रणयरोषम्।)

**पत्रलेखा**—(स्वगतम्) जाणीमो से अभिप्पाअं। (प्रकाशं विदूषकं प्रति) अय्येण वि एत्थ वादइएण होदव्वं।

(छाया—जानीमोऽस्याभिप्रायम्। आर्येणाप्यत्र वादयित्रा भवितव्यम्।)

**विदूषकः**—एस आअदोह्मि।

(छाया—एष आगतोऽस्मि।)

(निष्क्रान्ताः सख्यौ विदूषकश्च)

**कादम्बरी**—कहं गओ एव्व सहीअणो।

(छाया—कथं गत एव सखीजनः।)

**चन्द्रापीडः**—(उपसृत्य) देवि, अलमलमावेगेन। एषोऽस्मि ते संनिहितः। कथय; किं करोमि?

किं कीर्णानलकानुदस्य कुसुमैरुत्तंसयामि प्रिये
प्रस्विन्नं मुखमारुतेन शनकैः किं वीजयाम्याननम्।
शय्यापद्मरजःकणैः शबलितं किं मार्जयाम्यङ्गकं
स्रस्तं किं नु समादधे रशनया वासो नितम्बाश्रयम् ॥२८॥

कादम्बरी—(ससाध्वसातिशयम्) मा करेदु भवं अदिक्कमं विणअस्स।

(छाया—मा करोतु भवानतिक्रमं विनयस्य।)

चन्द्रापीडः—कान्ते कादम्बरि,

जीमूतेन विना कदा नु निमिषं वर्तेत सौदामिनी
ज्योत्स्ना कैरवबन्धुना कथमहो भ्रश्येत विश्लेषिणी।
सिन्धोः संगममन्तरा न तटिनी कल्पेत विश्रान्तये
किं त्यक्त्वा विधृतिं लभेत लतिका बालद्रुमोपाश्रयम्॥ २९॥

(इत्यालिङ्गनमभिनयति)

कादम्बरी—(स्वस्तिकपिहितस्तना नाट्येन परिहरन्ती) सव्वहा णाहं करेमि पडिण्णालङ्घणं। किं मरणादो परं करिसज्जइ मे मम्महेण?

(छाया—सर्वथा नाहं करोमि प्रतिज्ञालङ्घनम्। किं मरणात्परं करिष्यते मे मन्मथेन?)

(नेपथ्ये)

इदो इदो अय्या।

(छाया—इत इत आर्या।)

(उभावाकर्ण्य सावहित्थं तिष्ठतः)

(ततः प्रविशति ससखीजना महाश्वेता पत्रलेखाविदूषकौ च)

**महाश्वेता**—(स्वगतम्) ण खु सहीअणे कहं वि लम्भिअ-रहस्साविं काअम्बरी हदपडिण्णा णिब्बन्धेण मणोरहं पूरेदि। होदु; एत्तिए जादे आहं एव्व से दुरग्गहं अवणइस्सं। (उपसृत्य प्रकाशम्) साग्अं कुमारस्स।

(छाया—न खलु सखीजने कथमपि लम्भितरहस्यापि कादम्बरी हतप्रतिज्ञा निर्बन्धेन मनोरथं पूरयति। भवतु; एतावति जाते अहमेवास्या दुराग्रहमपनेष्यामि। स्वागतं कुमारस्य।)

**चन्द्रापीडः**—(उत्थाय प्रणमति)

**महाश्वेता**—सहि काअम्बरि, अवि दाणिं उवसन्दो तुज्झ संदावो? करिज्जमाणम्मिवि पडिआरे कहं गुणो णत्थि?

(छाया—सखि कादम्बरि, अपीदानीमुपशान्तस्तव संतापः? क्रियमाणेऽपि प्रतीकारे कथं गुणो नास्ति?)

**सख्यौ**—अम्हो! पेक्ख जुवराअस्स सहित्तणं; जो राअकज्जाइं वि अणवेक्खिअ तुज्झ वअणाणुरोहेण एत्तिअं भूमिं पच्चागओ।

(छाया—अहो! प्रेक्षस्व युवराजस्य सखित्वम्; यो राजकार्याण्यप्यनवेक्ष्य तव वचनानुरोधेन एतावतीं भूमिं प्रत्यागतः।)

**चन्द्रापीडः**—अभ्यर्हणीय एवार्याया निदेशः। अथ पुनरेवं देव्याः शरीरस्थितिमुपश्रुत्यापि कथमवस्थातुं पार्यते? पश्यन्तु भवत्यः;

सुख इव सुहृदो जनस्य दुःखे प्रणयवता सविधस्थितिर्विधेया।
व्यसनमयमपोहितुं नु किंचित् प्रभुरियती तु सुमानुषस्य शैली॥३०

(प्रविश्य ससंभ्रमम्)

**केयूरकः**—युवराज, स्कन्धावारादुपागतो वलाहकसुतो मेघनादः प्रतिहारभूमौ विज्ञापयति—उज्जयिनीतो महाराजसकाशात् जङ्घाकारिकाः परापत्य देवं दिदृक्षन्त इति।

**चन्द्रापीडः**—(महाश्वेतामवेक्षते)

**महाश्वेता**—(स्वगतम्)पच्चावि कन्धावारादो णिवट्टिएण इमिणा सक्कं सहीए पाणिग्गहं काअइदुं जइ दैवं णान्तराओ होदि।

(**छाया**—पश्चादपि स्कन्धावारात् निवृत्तेन अनेन शक्यं सख्याः पाणिग्रहं कारयितुं यदि दैवं नान्तरायो भवेत्।)

**मदलेखा**—तमालिए, जुवराअस्स दंसणेणेव्व ईस सत्थहिअआ विअ पिअसही।

(**छाया**—तमालिके, युवराजस्य दर्शनेनैव ईषत् स्वस्थहृदयेव प्रियसखी।)

**महाश्वेता**—काअम्बरि, अणुजाणाहि से गमणं पुणो दंसणस्स।

(**छाया**—कादम्बरि, अनुजानीह्यस्य गमनं पुनर्दर्शनाय।)

**कादम्बरी**—(स्वगतम्) कहं अणुजाणिस्सं? (प्रकाशम्) अणुवट्टणिज्जाइ खु राअकज्जाइ।

(**छाया**—कथमनुज्ञास्यामि? अनुवर्तनीयानि खलु राजकार्याणि।)

**केयूरकः**—(स्वगतम्) अतिमहत् खलु वैमनस्यं देव्याः। एवं हि प्राथमिकानुरागेषु,

शालीनतया मिथुनान्यनधिगतान्योन्यचित्तवृत्तीनि ।
पूरयितुमप्रगल्भान्याशामनुशेरते सुचिरम् ॥ ३१ ॥

**चन्द्रापीडः**---(स्वगतम्) हन्त ! कथंचिदासादितप्रणयिनीसमागमेनापि किमिव मयोपलब्धं वाञ्छितव्येषु ।

आघ्रातं न मुखारविन्दमसकृत्पीतो न बिम्बाधरो
रोमाञ्चस्पृशि भोगलक्ष्म न नखैरस्याः कपोले कृतम् ।
नीवीविश्लथनच्छलान्न विहृतं नाभिह्रदे पाणिना
काञ्चीदाम्नि निबद्धलक्षमपि मे चक्षुर्न लब्धोत्सवम् ॥३२॥

अथवा । एतावदेव मे श्रेयः ।

स्तनचन्दनपङ्क एष तस्या
निबिडालिङ्गनमङ्गलैकसाक्षी ।
मदनद्विपमर्दितावशिष्टं
मम संजीवयतीव हृत्सरोजम् ॥ ३३ ॥

(प्रकाशम्) स्मर्तव्योऽयं जनो देव्याः परिजनकथासु । न तु जीवतामुना पुनर्देवीदर्शनमसंभाव्य स्थीयत इत्यवधारणीयम् ।

(पत्रलेखाविदूषकाभ्यां सह परिक्रामति)

**कादम्बरी**---(पत्रलेखां प्रति) सहि, चिट्ठसु तुमं । पच्चा पेसइज्जसि ।

(छाया---सखि, तिष्ठ त्वम् । पश्चात् प्रेषिष्यसे ।)

चन्द्रापीडः—पत्रलेखे, धन्यासि । सेव्यतां मदर्थे देवी ।

पत्रलेखा—(चन्द्रापीडस्य पादयोर्निपत्य निवर्तते)

विदूषकः—भो, दाणिं एक्कोह्मि दे अवसिट्ठो सहअरो ।

(छाया—भो, इदानीमेकोऽस्मि ते अवशिष्टः सहचरः ।)

महाश्वेता—सहि काअम्बरि, तुमं वि दाणिं लद्धास्सासा अब्भन्तरं पविसिअ सरीरट्ठिइं णिव्वट्टेहि ।

(छाया—सखि कादम्बरि, त्वमपीदानीं लब्धाश्वासाभ्यन्तरं प्रविश्य शरीरस्थितिं निर्वर्तय ।)

कादम्बरी—जह रुइअं अय्याए । (स्वगतम्) एत्तिअं मे सुकअं महाभाअसंगमस्स ।

(छाया—यथा रुचितमार्यायै । एतावन्मे सुकृतं महाभागसंगमाय ।)

चन्द्रापीडः—(परिक्रामन्नात्मगतम्) नूनमिदानीम्,

आकृष्यते स्मरेण प्रतिज्ञया धार्यते च हृदयेयम् ।
कादम्बिनीव मरुता मेखलया चाद्रिराजस्य ॥ ३४ ॥

भवतु । प्रभवति हि भगवती भवितव्यता ।

(इति निष्क्रान्ताः सर्वे ।)

चतुर्थोऽङ्कः ।



# पञ्चमोऽङ्कः ।



(नेपथ्ये) भो भो रङ्गश्रृङ्गारसंगीतशेखरप्रभृतयो दिव्यदेशनटाः, महाराजतारापीडप्रेषितस्य लेखस्य वचनानुपदमेवोज्जयिनीं प्रस्थितो युवराजः । ननु भवद्भिर्नाट्यप्रयोगप्रदर्शनं प्रत्यमोघप्रयत्नैर्भवितव्यम् ; यत्तेनैव चन्द्रापीडेनात्मनो द्वितीयं हृदयममात्यशुकनाससूनुरार्यवैशम्पायनः सेनापतिना बलाहकेन समं चिरानुभूतदिग्विजययात्रापरिक्लेशतया शनैः प्रस्थास्यमानस्य स्कन्धावारस्य रक्षणाय नियुक्तोऽत्र वर्ततेऽद्यापि ।

तस्यैवास्यापि मूर्ध्ना कलयति सकलः शासनं राजलोको
भोगास्तेनेव सर्वे निरवधिकमनेनापि भुज्यन्त एव ।
एषोऽपि प्राप्तकालं प्रथयति स इव प्रीतचेताः प्रसादां-
स्तस्मादस्मै प्रयोगोऽप्ययमतिचतुरं दर्शनीयो भवद्भिः ॥ १ ॥

## चूलिका



(ततः प्रविशति बलाहकः)

**बलाहकः**—अहो ! माहाभाग्यं महाराजतारापीडस्य ;

भारतवर्षमखण्डं चन्द्रापीडेन भुजबलाद्विजितम् ।
किंनरवर्षमिदमपि क्रीतं सौहार्दशुल्केन ॥ २ ॥

(विमृश्य) प्रत्यागता खलु चित्ररथराजधान्याः कुमारस्य सर्वविस्रम्भभूमिः कुलूतेश्वरनन्दिनी पत्रलेखा। तदियं द्वितीयामात्याय वैशम्पायनायावेद्य युवराजनिदेशानुकूलं वत्सेन मेघनादेन साकं प्रेषणीया मयोज्जयिनीमग्रतो दण्डचक्रस्य। नन्वसौ दिव्यदेशकुशीलवैः प्रभावनिर्मिते सङ्गीतगृहे प्रवर्त्यमानं नाट्यप्रयोगं दिदृक्षुरास्ते। यावदेनमुपतिष्ठे। (इति परिक्रामन्) अये! सायंतनसमयशोभातिशयः शिबिरसंनिवेशस्य। यतः—

आस्ते हस्तधृतासिकण्टकवृतेराराप्रवीरव्रजो
यान्त्यायान्ति च यामवारणघटाः पर्यायतो वीथिषु।
औज्ज्वल्यं पटमण्डपानि दधते दीपप्रभामण्डलै-
र्गायन्तश्च कुमारविक्रमकथां दीव्यन्त्यमी वन्दिनः॥ ३॥

(अग्रतोऽवलोक्य) अहो! हृदयंगमत्वं संगीतशालायाः। अत्र हि—

गीतान्युन्मदयन्ति केलिहरिणान्वीणानिनादैः समं
संमूर्च्छन्मुरजध्वनिः कलयते केकावतां कौतुकम्।
चारीचङ्क्रमचातुरीषु चरणे वल्गन्ति हंसा मुहु-
र्मञ्जीराण्यनुरञ्जयन्ति सुदृशामामञ्जुभिः शिञ्जितैः॥४॥

(प्रविश्य) अयं द्वितीयामात्यः।

इदानीं युवराजस्य वियोगात्सख्युरुन्मनाः।
विनोदैरेवमात्मानमाश्वासयितुमर्हति॥ ५॥

(उपसर्पति)

(ततः प्रविशति आसनस्थितो वैशम्पायनः)

**वैशम्पायनः** (स्वगतम्)—अये ! किमिदम् ?

देशोऽयमभिमतजनप्रथमसमागममुहूर्तसाक्षीव ।
व्यथयति दर्शनमात्रादकृतार्थतया चिरोत्सुकं चेतः ॥ ६ ॥

अथवा चन्द्रापीडविरहनिर्वेदस्यैव विवर्तोऽयम् ।

(पुरोऽवलोक्य)

कथम् ! सेनापतिरितोऽभ्येति । आर्य, इत इतः ।

**वलाहकः**—विजयताममात्यः । (उपविशति)

**वैशम्पायनः**—आर्य वलाहक,

ननु विरहितः सख्यैवैकेन सांप्रतमस्म्यहं
किमिदमहहा विष्वङ् मोहस्तथा मम जृम्भते ।
प्रभवति यथा पित्रोरत्यन्तदर्शनविप्लवे
करणविगमे यच्च स्वस्यैव नूनमुपस्थिते ॥ ७ ॥

**वलाहकः**—(कर्णौ पिधाय) शान्तं पापं शान्तं पापम् । किमुपन्यस्यति महाभागः ? प्रकृतिरियं प्राचीननिबन्धनस्य सौहार्दस्य । (स्वगतम्) कथमिवैनमाक्षिपामि ? (प्रकाशम्, नेप-

थ्यं प्रति,) अयि भोः कुशाश्विनः, किमित्यद्यापि कालातिपातः क्रियते? प्रकाश्यतां तद् दृश्यमतिविचित्रम् ।

(प्रविश्य)

**सूत्रधारः**—(साञ्जलिबन्धम्)

जयति संसारतरोरनङ्ग एकः फलं च मूलं च ।
स्वदते यस्य मधुरिमा स्थैर्येण च यो दुरुन्मूलः ॥ ८ ॥

**बलाहकः**—समपदेयमभिनन्दनीया नान्दी ।

**वैशम्पायनः**—अहो! अर्थसारवत्त्वं वाक्यशिल्पस्य ।

**सूत्रधारः**—(सबहुमानम्)

चातुर्विध्यममुष्य पङ्कजभुवा वेदेभ्य उद्भावितं
कर्तुं भूतभविष्यतोरलमिदं प्रत्यक्षतामर्थयोः ।
अङ्गत्वं प्रतिपद्य चास्य सकलाः कामं स्वदन्ते कलाः
साम्राज्यस्य फलं न कस्य हृदयोल्लासाय नाट्यामृतम् ॥९॥

तदवधारयतु रसिकलोको मया प्रयुज्यमानमिदं कादम्बरी-ग्रथितवस्तु महाश्वेतापुण्डरीकं नाम किमपि नयनामृतायमानं रूपकम् ।

**वैशम्पायनः**—(सप्रत्यभिज्ञमिव, स्वगतम्) कथं महाश्वेता नाम! भवतु पश्यामः। (प्रकाशम्) प्रवेश्यन्तां पात्राणि ।

**सूत्रधारः**—(नेपथ्यं प्रति) अये! गीयतां तावदभिनेयार्थसंनिविष्टं सुरभिसमयमधिकृत्य ।

(नेपथ्ये गीयते)—

जावक्खु महु निपाउं भमरजुआ चूअमज्जरीं लगइ ।
ओहरइ कहि वि इमं ताव च्चिप्पहारिणो पवणो ॥ १० ॥

(छाया—यावत्खलु मधु निपातुं भ्रमरयुवा चूतमञ्जरीं लगति ।
अपहरति कुत्राप्येनं तावत्क्षिप्रहारी पवनः ॥)

**वैशम्पायनः**—(सविमर्शम्) किमिदमुपक्षिप्तमितिवृत्तं गीतविशेषेण ?

**वलाहकः**—ध्रुवा हि नाटयस्य जीवातुः ।

**सूत्रधारः** – अये ! इयमार्यैव परिगृहीतवती वर्णिकां महाश्वेतायाः । भवतु ; यावदहमप्यनन्तरसंविधानाय सज्जीभवामि ।

(इति निष्क्रान्तः)

## आमुखम्



(ततः प्रविशति महाश्वेता सखी च)

**महाश्वेता**—सहि तरलिए, जाव अम्बाए चउम्मुहाअदणे णिअमविसेसो णिव्वत्तिज्जइ, ताव अह्मे इदो विहरह्म ।

(छाया—सखि तरलिके, यावदम्बया चतुर्मुखायतने व्रतविशेषो निर्वर्त्यते तावदावामितो विहरावः ।)

तरलिका—जह रुइअं पिअसहीए।

(छाया—यथा रुचितं प्रियसख्यै ।)

(उभे परिक्रामतः)

वैशम्पायनः—(निरूप्यात्मगतम्)।

जन्मान्तरे नु दृष्टा चित्रे स्वप्ने महेन्द्रजाले वा।
सप्रत्यभिज्ञमिव मे मदयति हृदयमियमिन्दुमुखी ॥ ११ ॥

वलाहकः—(आश्चर्यं नाटयन्) अहो! किमीदृशमपि विद्यते श्वैत्यम्?

उत्कीर्णा किमियं शशाङ्कमणिना दन्तैः किमुत्कीलिता
स्यूता किं बिसिनीगुणैर्विरचिता श्रीखण्डसारेण किम्।
किं कर्पूरशलाकया विलिखिता किं मौक्तिकैर्गुम्भिता
किं तारैः परिकल्पिता किमथवा चन्द्रांशुभिर्निर्मिता ॥१२॥

तरलिका—भट्टिदारिए, पेक्ख अच्छोदसरपरिसरवणेसु विहरिज्जन्तस्स सस्सिरीअत्तणं वसन्तकालस्स।

(छाया—भर्तृदारिके, पश्य अच्छोदसरःपरिसरवनेषु विहरमाणस्य सश्रीकत्वं वसन्तकालस्य।)

महाश्वेता—हला, इदो मम्महविलासवाससालाए रत्तासोअतरुवाडिआए पुप्फाइं ओचिणुमो।

(छाया—सखि, इतो मन्मथविलासवासशालायां रक्ताशोकतरुवाटिकायां पुष्पाण्यवचिनुवः।)

(इत्युभे पुष्पावचयं नाटयतः)

**वैशम्पायनः**—(स्वगतम्)

करकमलस्य वरतनोरशोकतरुकुसुमपल्लवानां च ।
निपुणनिरूपणीयो मणिमुद्रिकयैव केवलं भेदः ॥ १२ ॥

**महाश्वेता**—(विभाव्य) कुदो एदं अणणुभूदपुव्वं किंवि सोरहं विभाविज्जइ? (निरूप्य) सच्चं एदे खु जुत्थिआए सेपालिआपसूणपरिमलं अणुसरन्ति महुअरा ।

(छाया—कुत एतदननुभूतपूर्वं किमपि सौरभं विभाव्यते? सत्यमेते खलु यूथिकायाः शेफालिकाप्रसूनपरिमलनुसरन्ति मधुकराः ।)

**महाश्वेता**—अह्मेवि इमं अणुसरह्म ।

(छाया—आवामपीमं अनुसरावः ।)

(उभे परिक्रामतः)

**वलाहकः**—अये! गगनपथादवतीर्णः कोऽपि दिव्यर्षिकुमारकः सख्या सह प्रविशति । संप्रति हि चिरादपरोक्षिते तस्मिन् समानाधिकरणता शान्तिशृङ्गारयोः । अयं हि—

जटाभिरभितस्तटित्पटलपाटलाभिर्वृतो
दधत्किमपि वल्कलं कनकवर्णकर्णेजपम् ।
सखेलमवतंसयत्यलघुसौरभोद्गारिणी-
ममर्त्यतरुमञ्जरीममृतबिन्दुनिष्यन्दिनीम् ॥ १४ ॥

(ततः प्रविशति यथानिर्दिष्टं मुनिकुमारद्वयम् )

**प्रथमः**—वयस्य कपिञ्जल, नन्वितो नेदीयानेव गौरीसखविहारसौधो गिरिः ।

**कपिञ्जलः**—प्रियसख पुण्डरीक, अतः खलु भवानिह चैत्ररथे मुहूर्तमम्बरगमनखेदमपहर्तुमर्हति ।

(इत्युभौ परिक्रामतः)

**वैशम्पायनः**—(पुण्डरीकमालोकयन्नेव स्वगतम् ) आः! कुतस्त्योऽयं परिचयानुरोधी पक्षपातः ?

आसादितापरशरीरपरिग्रहोऽय-
मात्मैव मे किमवभाति यथात्मदर्शे ।

(कपिञ्जले दत्तदृष्टिः)

दृष्टश्चिराय किमयं मम बालमित्र-
मालिङ्गनोत्सुकमिवाङ्गमिदं विधत्ते ॥ १५ ॥

(इति पश्यति)

**कपिञ्जलः**—सखे, पश्य सविशेषचारुतां चैत्ररथस्य चैत्रदिवसेषु । अत्र हि—

अविरल इव राशिः पल्लवानामशोकः
स्तबक इव गरीयान् पुष्पितो बालचूतः ।

अलिकुलमिव साक्षान्माधवीमण्डपाग्रं
मरुदयमपि सान्द्रः सौरभस्येव पूरः ॥ १६ ॥

पुण्डरीकः—(समन्तादवलोक्य) चित्रमिदमस्मिन् वसन्तकाले तिरश्चामपि शासनानुवृत्तिचातुर्यं रतिसहचरस्य । तथाहि—

वकुलकुसुमपात्रीसंभृतं चञ्चरीकः
पिबति मधु सुगन्धि प्रेयसीपीतशेषम् ।
अयमपि कलकण्ठो मौग्ध्यभाजः प्रियायाः
परिणमयति कूजन् पञ्चमामोदमुद्राम् ॥ १७ ॥

वलाहकः—(वैशम्पायनपुण्डरीकौ निर्वर्णयन्नात्मगतम्।) किंनु खलु भवेन्निमित्तमेतस्य ?

रूपं निर्जितपञ्चबाणमनयोः साधारणं लक्ष्यते
पार्थक्यादुपलक्ष्यते किमुचितो व्याहारचेष्टाक्रमः ।
शृङ्गारार्हमिदं वयश्च न मिथो धत्ते विसंवादितां
वेषः केवलमेक एव कुरुते भेदं द्वयोरप्यहो ॥ १८ ॥

वैशम्पायनः—(स्वगतम्)

नटविलसितमात्रं सर्वमेतद्विजाने
तदपि खलु मनो मे तात्त्विकप्रत्ययेन ।
श्रयति किमपि भूयो हन्त पारिप्लवत्वं
भवति कथमकस्माद् दुर्निवारोऽभिषङ्गः ॥ १९ ॥

महाश्वेता—(पुरोऽवलोक्य) अह्मो! को एसो परिगहिअ-पदविसेसो मम्महो विअ वसन्तेण अणुरूवेण सखिणा अणुगमिज्जन्तो तावसकुमारओ आअच्छइ ?

(छाया—अहो क एष परिगृहीतपदविशेषः मन्मथ इव वसन्तेनानुरूपेण सहानुगम्यमानः तापसकुमारक आगच्छति ?)

तरलिका—इमिणा सोरहविसेसेणवि से कण्णावअंसमञ्ज-रीए एदाए उग्गएण होदव्वम् ।

(छाया—अनेन सौरभविशेषेणापि अस्य कर्णावतंसमञ्जर्या एतस्या उद्गतेन भवितव्यम् ।)

महाश्वेता—(स्वगतम्) ण खु मए पुच्छिदुं पारिज्जइ । होदु एव्वं दाव । (प्रकाशम्) को उण हवे सो पाअवो जो एदाए उब्भवो ?

(छाया—न खलु मया प्रष्टुं पार्यते। भवत्वेवं तावत्। कः पुनर्भवेत् स पादपः य एतस्या उद्भवः ?)

तरलिका—जाव से सखिणो मुहादो सव्वं वि पुच्छम्मि । सहीए वि उवसप्पिअ अब्भरुहणिओ खु मुणिअणो।

(छाया—यावदस्य सख्युर्मुखात् सर्वं पृच्छामि। सख्याप्युपसृत्य अभ्यर्हणीयः खलु मुनिजनः ।)

(उभे उपसर्पतः)

पुण्डरीकः—(दृष्ट्वा सस्पृहम्)

का पुनरियं नतभ्रूरधरीकृतनिखिलयुवतिसौभाग्या ।
मदनास्त्रदेवता किं किं वा वनदेवतैव चैत्ररथी ॥ २० ॥

महाश्वेता—(स्वगतम् ) अह्मो! इमस्स दंसणेणेव्व कण्ण-आअणविरुद्धस्स गोअरीभूदह्मि भावस्स ।

(छाया—अहो अस्य दर्शनेनैव कन्यकाजनविरुद्धस्य गोचरीभूतास्मि भावस्य ।)

तरलिका—एदेहिं रत्तासोअप्पसूणेहिं अञ्जलिं करेहि मुणि-जणस्स ।

(छाया—एतैः रक्ताशोकप्रसूनैरञ्जलिं कुरु मुनिजनस्य ।)

महाश्वेता—(उपसृत्य स्वगतम् ) ण खु दाणिं मे वि-आरो हवे?

(छाया—न खल्विदानीं मे विकारो भवेत् ?)

(इति पुष्पाञ्जलिं विकीर्य सविलासं प्रणमति)

पुण्डरीकः—(स्वगतम्) अये! कथमतिशयितमनोभवानुभा-वोऽस्मि । मम हि—

आनम्रमौलि रुचिरालुलितालकान्त-
मालोलहारदरनामितकण्ठनालम् ।
आलक्ष्यमाणरमणीयतरापराङ्ग-
मेणीदृशा सललितं रचितः प्रणामः ॥ २१ ॥

(प्रकाशम् ) वाञ्छानुकूलफलभागिनी भूयाः ।

तरलिका—भअवं, अणुग्गहीओ अअं जणो ।

(छाया—भगवन्, अनुगृहीतोऽयं जनः ।)

**वलाहक:**—(महाश्वेतापुण्डरीकौ विभाव्य) मनोज्ञानि खलु विलासिनां प्राथमिकान्यनुरागचेष्टितानि। यतः—

निर्निद्रनीलनलिनच्छदनिर्विशेषै-
रन्योन्यमेव किरतोरनयोरपाङ्गैः।
अभ्यस्यतोः स्वत इवास्त्रकलामपूर्वो
द्रष्टा चिरं खुरलिजन्यमनन्यजन्मा ॥ २२ ॥

**तरलिका**—(तयोराकारं निरूप्यात्मगतम्।) फलिदं णिम्माणणिउणदाए विहिणो। जदो दुवेवि एक्कपए एव्व मम्महसंगआ विभाविअन्ति। (कपिञ्जलमुपगम्य प्रकाशम्) भअवं, अत्थि किंवि कोऊलम्।

(छाया—फलितं निर्माणनिपुणतया विधेः। यद् द्वावप्येतौ एकपद एव मन्मथसंगतौ दृश्येते। भगवन्, अस्ति किमपि कौतूहलम्।)

**कपिञ्जल:**—कियत्यंशे ?

**तरलिका**—को उण एसो महाणुभावो, कस्स वा तवस्सिणोत्ति एत्ति एव।

(छाया—कः पुनरेष महानुभावः, कस्य वा तपस्विन इत्येतावत्येव।)

**कपिञ्जल:**—भद्रे, किममुना तवानुयोगेन ? तदपि श्रूयताम्।

**महाश्वेता**—हिअअ, अवहिओ होहि।

(छाया—हृदय, अवहितं भव।)

**कपिञ्जलः**—एष दिव्यलोकनिवासिनो भगवतः श्वेतकेतो-र्लक्ष्म्यामुत्पन्नः पुण्डरीको नाम ।

**वैशम्पायनः**—(सादरातिशयम्) अहो! भुवनत्रयपवित्राणि चिरपरिचितानि चाक्षराण्यनुश्रूयन्ते ।

**कपिञ्जलः**—सोऽयमिदानीं चतुर्दशीति कृत्वा कृत्तिवाससं प्रणिनंसुः कैलासमचलं प्रतिष्ठते । इयं च मध्येपथं नन्दनवनदेवतयास्य कर्णपूरीकृता कल्पद्रुमकुसुममञ्जरी ।

**तरलिका**—जुज्जइ ।

(छाया—युज्यते ।)

**महाश्वेता**—(साशंसमात्मगतम्)

धण्णासि कण्णलग्गा चुम्बस्यस्मेत्थ मञ्जरि कवोलम् ।
मअरन्दमहुरमहुअरणिणअणिहेण अ जप्पसि रहस्सम् ॥२३॥

(छाया—धन्यासि कर्णलग्ना चुम्बस्यस्यात्र मञ्जरि कपोलम् ।
मकरन्दमधुरमधुकरनिनदनिभेन च जल्पसि रहस्यम् ॥)

**वैशम्पायनः**—अये ! विस्मृतः सर्वोऽप्येष वृत्तान्तोऽद्य मया स्मर्यत इव ।

**वलाहकः**—स्थान एवैतत् । कुतः—

भव एष भवत्यनादिरस्मि-
न्ननुभूयेत न किं नु केन पुंसा ।

जननान्तरनिह्नुतानुबन्धं
स्मरणं तस्य समानवस्तुजन्यम् ॥ २४ ॥

**पुण्डरीकः**—(महाश्वेतां प्रति) अयि कुतूहलिनि, किममुना प्रश्नमात्रेण ? गृह्यतामियम् । ( इति तस्याः कर्णावतंसं विरचयन् स्वगतम् ) हन्त, चरितार्थोऽस्मि । यतः—

अङ्कुरितपुलककजालकमभितो घर्मोदबिन्दुतारकितम् ।
अस्याः कपोलमण्डलमनेन मे पाणिना स्पृष्टम् ॥ २५ ॥

(वैवश्यं नाटयति)

**महाश्वेता**—( विभाव्य आत्मगतम्) कहं एसो मम्महपराअत्तहिअअत्तणेण करअलादो गलन्तीं अक्खमालिअंवि ण मुणेदि । जाव इमं गेह्णामि ।

**(छाया—कथमेष मन्मथपरायत्तहृदयतया करतलात् गलन्तीमक्षमालिकामपि न मन्यते । यावदिमां गृह्णामि ।)**

(आदाय कण्ठे धारयति)

**वैशम्पायनः**—(निरूप्य)

वदनं स्फटिकाक्षमालिकाङ्क
धृतदिव्यद्रुममञ्जरीकमस्याः ।
अनुयाति सतारकानिकायं
प्रथमानामृतफेनपुञ्जमिन्दुम् ॥ २६ ॥

(प्रविश्य पटाक्षेपेण)

छत्रग्राहिणी—भट्टिदारीए, एहि दाव। विरइदो खु वद-विसेसो अम्बाए।

(छाया—भर्तृदारिके, एहि तावत्। विरचितः खलु व्रतविशेषोऽम्बया।)

महाश्वेता—(स्वगतम्) कहं इमं उज्झिअ गमिस्सिस्सं? अहवा एत्तिअं एव्व मे णअणपुण्णफलम्।

(छाया—कथमिमं परित्यज्य गमिष्यामि? अथवा एतावदेव मे नयनपुण्यफलम्।)

(इति कथंचित् कतिचित्पदानि गच्छति)

तरलिका—(स्वगतम्) अह्मो! पिअसहीए दाणिं विवण्णदा वअणकमलस्स।

(छाया—अहो, प्रियसख्या इदानीं विवर्णता वदनकमलस्य।)

कपिञ्जलः—(निरूप्य सामर्षम्) भो अजितात्मन् पुण्डरीक,

सत्यमनृतेन तेजस्तमसा सुकृतमपि दुष्कृतेन जितम्।
बोधोऽप्यविद्यया तव यदि नियमः कामचारेण॥ २७॥

पुण्डरीकः—(साशङ्कम्) सखे कपिञ्जल, कथय कुतो मयि स्खलितमारोप्यते?

कपिञ्जलः—ननु भवाननया दुर्विनीतकन्यया हृतामक्षमालामपि न चेतयते। तत्कृतं ते सब्रह्मचारितया।

(इति निष्क्रान्तः)

पुण्डरीकः—(स्वगतम्) कृतार्थेयमक्षमाला अस्याः कण्ठग्रहण-महोत्सवेन । (प्रकाशम्) अयि तरले, मिषतामस्माकमक्षमालां चोरयसि । (इति कोपमभिनयति)

वलाहकः—अमात्य वैशम्पायन, पश्य तावत् ।

भ्रुकुटिमलिके स्वैरं बध्नातु दिव्यमुनेः सुतो
वदतु परुषा वाचः कृच्छ्रात्स्फुरद्दशनच्छदः ।
तदपि हृदयाकूतं ज्ञातव्यमस्य दृगञ्चलै-
र्हृदयदयितावक्त्राम्भोजभ्रमद्भ्रमरोपमैः ॥ २८ ॥

महाश्वेता—(निवृत्य, स्वगतम्) अहिअअरो से अमरिस्सोत्ति भिण्णमुहराअदेव्व सूएदि । (प्रकाशम् ) णिपडन्ती अक्खमालिआ महीपराएण दूसिज्जइत्ति मए गहिआ । गह्लिअदु इअं ।

(छाया—अधिकतरोऽस्यामर्ष इति भिन्नमुखरागतैव सूचयति । निपतन्ती अक्षमालिका महीपरागेण दूष्यत इति मया गृहीता । गृह्यतामियम् ।)

(इति कण्ठादेकावलीमुन्मुच्य दत्वा ससखीजना निष्क्रान्ता)

पुण्डरीकः—(एकावलीं धारयन् ) हन्त हन्त,

कथमपि गतैव कान्ता न्यासमिव निधाय मयि निजं चेतः ।
मामकमपि दृष्ट्या पुनरादायेव प्रतिन्यासम् ॥ २९ ॥

वैशम्पायनः—अये ! सौदामिनीव विरचितस्फुरणा क्वापि तिरोहितैव कमललोचना । (निरूप्य)

अस्या मुखं मृगदृशश्चीनांशुकयवनिकान्तरितम् ।
शरदभ्रशकलपिहितं धृतये मम चन्द्रबिम्बमिव ॥ ३० ॥

(मदनाकूतमभिनयन्)

**पुण्डरीकः—**

सैन्यं वामदृशो रतिः सहचरी मित्रं वसन्तः शराः
पुष्पाणि भ्रमरावली किल गुणः पुण्ड्रेक्षुकाण्डं धनुः ।
किं वान्यद्बहु चन्द्रचन्दनमरुन्मुख्याश्च संबन्धिनः
श्लाघ्यं सर्वमिदं तव स्मर न चेदुत्कण्ठितान् बाधसे ॥ ३१ ॥

यावदिमामेवानुसरन् पश्चाद्रिलम्बिनः परिजनादशेषतोऽस्याः प्रवृत्तिमवगच्छामि । (इति परिक्रामति)

(प्रविश्य)

**तरलिका**—एवं मए इमस्स दिट्ठिगोअरे वट्टिदव्वम् । अणुवट्टणिज्जा खु मए मम्महवसगआ पिअसही ।

(**छाया**—एवं मयास्य दृष्टिगोचरे वर्तितव्यम् । अनुवर्तनीया खलु मया मन्मथवशगता प्रियसखी ।)

(इति तथा करोति)

**पुण्डरीकः**—(तरलिकां दृष्ट्वा उपसृत्य) भद्रे, भवत्याः सखी नाम्ना कान्यक्षराणि संवननमूलमन्त्रतां नयति, जन्मना वा कस्य कुलमङ्गनारत्नखनिताम्?

**तरलिका**—एसा चन्दकिरणुब्भवाए गोरीए अच्छराए गब्भे गन्धव्वपइणा हंसेण उप्पाइदा महासेदा आवासभूदं हेमऊडपव्वदं

गच्छइ । अहं वि से तम्बूलकरङ्कवाहिणी पिअसही तरलिआ णाम ।

(छाया—एषा चन्द्रकिरणोद्भवाया गौर्या अप्सरसो गर्भे गन्धर्वपतिना हंसेनोत्पादिता महाश्वेता आवासभूतं हेमकूटपर्वतं गच्छति । अहं चास्याः ताम्बूलकरङ्कवाहिनी प्रियसखी तरलिका नाम ।)

वलाहकः—नूनमयमेव हेमकूटः कविना निबद्धः स्यात्, यो युवराजेन वारद्वयं प्रतिगतः ।

पुण्डरीकः—कल्याणि, तर्हि करणीयं त्वयेदं यन्मयाभ्यर्थ्यसे ।

तरलिका—अणुग्गहो खु अअं मे ।

(छाया—अनुग्रहः खल्वयं मे ।)

पुण्डरीकः—(उत्तरीयवल्कलाञ्चलमुत्पाट्य) यावदस्य तमालपादपस्य पल्लवरसेनौत्सुक्यसूचनीमिमामार्यामालिखामि । (यथानिर्दिष्टं करोति)

वैशम्पायनः—क इव तावदेतादृशस्यानुरागस्य समुचितः संदेशः ? (इति चिन्तयति)

पुण्डरीकः—(विलिख्य) भद्रे, त्वयेदमस्यै गन्धर्वराजपुत्र्यै रहः प्रदर्शनीयम् । (इति ददाति)

तरलिका—(नाट्येनादाय ताम्बूलभाजने निक्षिपति) एदं दाव भट्टिदारिअं पावेमि ।

(छाया—एतत् तावत् भर्तृदारिकां प्रापयामि ।)

(परिक्रामति)

**पुण्डरीकः**—(निवृत्य) क्व पुनरुन्मनसं विनोदयेयमात्मानम् ? (परिक्रम्य) अये ! तदिदमच्छोदपूरितमच्छोदं सरः । इदं हि,

पद्मैः प्राप्तमुखोपमैः परिचितभ्रूविभ्रमैरूर्मिभि-
श्चक्राह्वैः स्तनसंनिभैः कचभरप्रस्पर्धिभिः शैवलैः ।
मीनैर्नेत्रसमैर्नितम्बफलकप्रत्यर्थिभिः सैकतै-
र्बालां दर्शयतीव मे बहिरिदं बद्धासिकां मानसे ॥ ३२ ॥

(परितोऽवलोक्य)

तिलकाञ्चितद्विरेफा ललितलताकुसुमकिसलयावयवा ।
वन्या चैत्ररथीयं वनितेव मयात्र दृष्टा सा ॥ ३३ ॥

(इति परिक्रामति)

**वैशम्पायनः**—(निरूप्य) कथमुन्मादोपराग इव पुण्डरीकपूर्णचन्द्रस्य ।

**पुण्डरीकः**—(पार्श्वतो दत्तदृष्टिः मदनवेगं रूपयन्)

हृदयमपदे बद्धोत्कण्ठं द्विधा दलतीव मे
विगतविषयौत्सुक्यं चान्यदिवेन्द्रियमण्डलम् ।
विकलविकलः कायो भारायते परकीयवत्
किमपरममी प्रायः प्राणाः प्रयान्ति परं क्षणात् ॥ ३४ ॥

यावदिहैवास्य सरसस्तीररुहि रक्ताशोकलतागृहे विश्रान्तो भवामि ।

(इति निष्क्रान्तः)

**तरलिका**—एदं कण्णअन्तेउरदुवारं । एसा पिअसही सुण्णहिअआ पासाअसिहरम्मि तं एव्व दिसं आलोअअन्ती दीसइ । जाव से पिअआरिणी होमि ।

(**छाया**—एतत्कन्यकान्तःपुरद्वारम् । एषा प्रियसखी शून्यहृदया प्रासादशिखरे तामेव दिशमालोकयन्ती दृश्यते । तावदस्याः प्रियकारिणी भवामि ।

(प्रासादोत्पतनं रूपयति)

**वैशम्पायनः**—(निरूप्य) कथं सैवेयमायताक्षी ।

स्थूलाश्रुग्रथिताग्रपक्ष्मनयनं पाणौ वहन्ती मुखं
दीर्घोष्णैः श्वसितानिलैर्विदधती बिम्बोष्ठमन्यादृशम् ।
व्यापारानपहाय बाह्यकरणाधीनान् किमप्यालिख-
न्त्यन्तश्चित्रगतेव निश्चलतरैरङ्गैरियं दृश्यते ॥ ३५ ॥

(ततः प्रविशति यथानिर्दिष्टा महाश्वेता)

**महाश्वेता**—(स्वगतम्) अह्मो तारिसं वि खीरधवलं गत्तं परिचत्तकुमारीभावाए अभव्वाए मए पअडणीअदं पाविज्जइ । किं उण असुलहजणसङ्गमेक्कदुव्विअद्धाए मह आसासणम् ?

(**छाया**—अहो तादृशमपि क्षीरधवलं गात्रं परित्यक्तकुमारीभावया अभव्यया मया प्रकटनीयतां प्राप्यते । किं पुनरसुलभजनसङ्गमैकदुर्विदग्धाया ममाश्वासनम् ?)

**तरलिका**—(उपसृत्य) एदं ।

(**छाया**—एतत्)

(इति तदेव संदेशपत्रमुपायनीकरोति)

**महाश्वेता**—केण उण पेसिदं एदं ?

(**छाया**—केन पुनः प्रेषितमिदम्?)

**तरलिका**—जेण दे चोरिअं हिअअं ।

(**छाया**—येन ते चोरितं हृदयम् ।)

**महाश्वेता**—(उद्वेष्ट्यानुवाचयति)

"दूरं मुक्तालतया बिससितया विप्रलोभ्यमानो मे ।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः ॥" ३६ ॥

(इति पुनः पुनर्वाचयन्ती हर्षातिशयं निरूपयति)

**वैशम्पायनः**—आर्य वलाहक, किमेतत् ? ममापि हृदयगोचरं गतोऽयमेव वाग्गुम्भः ।

**वलाहकः**—उपपद्यत एव सहृदयानां कवीनां वैखरीविशेषेषु संवादः । तथाहि—

प्रतिभासाधारण्यादेकोऽर्थः स्फुरति सर्वहृदयेषु ।
उचितपदसंनिवेशात्सन्दर्भस्यापि सुलभमेवैक्यम् ॥ ३७ ॥

**तरलिका**—अवि पज्जत्तं चित्ताविक्करणम् ?

(छाया—अपि पर्याप्तं चित्ताविष्करणम् ?)

**महाश्वेता**—भाववुत्ती वि से उप्पेक्खीअदि ; जदो मुउलिओ ईसि वण्णविण्णासो । विसरिसरेहदाए अ विभाविज्जइ एव्व से विरहकाअरत्तणं वि ।

(छाया—भाववृत्तिरप्यस्योत्प्रेक्ष्यते ; यतो मुकुलित ईषत् वर्णविन्यासः । विसदृशरेखतया च विभाव्यत एवास्य विरहकातरत्वमपि ।)

(नेपथ्यार्धप्रविष्टा)

**प्रतिहारी**—भट्टिदारीए, कइञ्जलणामा तावसकुमारो आसण्णपडिहारो वट्टइ ।

(छाया—भर्तृदारिके, कपिञ्जलनामा तापसकुमारक आसन्नप्रतिहारो वर्तते ।)

**महाश्वेता**—पभञ्जणिए, एत्थ एणं पवेसेहि ।

(छाया—प्रभञ्जनिके, अत्रैनं प्रवेशय ।)

**प्रतिहारी**—तह ।

(छाया—तथा ।)

(इति निष्क्रान्ता)

(प्रविश्य)

**कपिञ्जलः**—स्वस्ति गन्धर्वराजपुत्र्यै ।

**महाश्वेता**—(उत्थाय अञ्जलिं बध्द्वा) इदो आसणं पडिगह्णउ भअवन्तो ।

(छाया—इत आसनं प्रतिगृह्णातु भगवान् ।)

(सर्वे उपविशन्ति)

महाश्वेता—(तरलिकां पश्यति)

तरलिका—भअवं, अवि कुसलं दे सहअरस्स ?

(छाया—भगवन्, अपि कुशलं ते सहचरस्य ?)

कपिञ्जलः—तदर्थ एवायमारम्भः ।

महाश्वेता—कहं विअ ?

(छाया—कथमिव ?)

वैशम्पायनः—हन्त ! सौहार्दायत्ततया आत्मनः काममयुक्तरूपमपि दूत्यमङ्गीकृतं मुनिना ।

बलाहकः—नेदमपोद्यं सुवृत्तानाम् । पश्य,

उन्मार्गेण प्रस्थितं साधुवर्गो
मित्रं युक्त्या वारयत्येव पूर्वम् ।
दुर्वारेऽस्मिन्नानुकूल्यं च धत्ते
स्वस्यायुक्तं कारयेत् किं न मैत्री ॥ ३८ ॥

कपिञ्जलः—कथमिदमतिह्रेपणीयं प्रकाशयेयम् ।

शमप्रधानाः क्व वयं तपोधनाः
क्व मन्मथः पामरलोकलालितः ।
गिरीनिदानीं प्रलयेऽप्यचञ्चला-
नलं समुन्मूलयितुं समीरणः ॥ ३९ ॥

**महाश्वेता**—भअवं, फुडं णिवेएहि।

(**छाया**—भगवन्, स्फुटं निवेदय ।)

**कपिञ्जलः**—(निश्वस्य) स्फुटैव हि भवत्योरपि तादात्विकी वृत्तिः पुण्डरीकस्य ।

**तरलिका**—अह इं ।

(**छाया**—अथ किम् ।)

**महाश्वेता**—अह्मेसु पडिणिवुत्तेसु कहं ?

(**छाया**—अस्मासु प्रतिनिवृत्तासु कथम् ?)

**कपिञ्जलः**—ततश्च सुहृद्मार्गप्रवृत्तोऽपि नोदासितव्य इति यावत्तमन्वेषयामि, तावता च कस्मिंश्चिदच्छोदबिसच्छेद्लतामण्डपे,

अश्रान्तरोदनभृशारुणलोचनान्तो
निश्वासधूसरविशुष्कतरोष्ठबिम्बः ।
अन्यादृशाकृतिरवैक्षि स पुण्डरीकः
कष्टं मया परिलुठन् स्फटिकस्थलीषु ॥ ४० ॥

**महाश्वेता**—(अपवार्य) कहं एत्तिअं आआसिज्जइ महाभाओ मम्महेण ।

(**छाया**—कथमेतावदायास्यते महाभागो मन्मथेन ।)

**तरलिका**—तह पेक्खिअतारिसावत्थो दाणिं एव्वं किलम्मइत्ति किं एत्थ अच्चरिअं ?

(छाया—तथा प्रेक्षिततादृशावस्थ इदानीमेवं क्लाम्यतीति किमत्राश्चर्यम् ?)

**कपिञ्जलः**—प्रबोधितश्च बहुधा मामेवमाह—

उपदिशसि यत्सखे मम मनसा खलु तदवधातुमभ्युचितम् ।
कामास्त्रकातरतया तामेव गतं मनः किमुपदेशैः ॥ ४१ ॥

**महाश्वेता**–(स्वगतम्) एवं खु मए पिअविरहिदाए सहीवअणाइं ॥

(छाया—एवं खलु मम प्रियविरहितायाः सखीवचनानि ।)

**वैशम्पायनः**—

उन्मादकत्वं वयसोऽवधार्य
दुर्वारतां मन्मथसायकानाम् ।
उद्दीपकत्वं च वसन्तलक्ष्म्याः
सखामुना स्यादनुवर्तनीयः ॥ ४२ ॥

**कपिञ्जलः**—यदा चास्य,

नवकिसलयैः शय्या रम्भादलैरुपवीजनं
मलयजरसैश्चर्चा गात्रे बिसैश्च परिष्क्रिया ।
अमृतशिशिरस्पर्शैरासेचनं च पयःकणै-
रजनि विफलं सर्वं कामः स केवलमेधते ॥ ४३ ॥

तदैवैनं त्वत्समागममन्तरा दुष्परिहरतापमवधार्य कमलिनीपलाशानयनापदेशादिहागतोऽस्मि ।

-लाहक:—उचितोऽयमुपक्रमोऽस्य ।

किमन्यैरुपचारैः स्याद्घोरे मदनसंज्वरे ।
अलब्धविषयो रागः प्रलयायापि कल्पते ॥ ४४ ॥

**महाश्वेता**—तरलिए, किं एत्थ पडिवज्जामो ?

(**छाया**—तरलिके, किमत्र प्रतिपत्स्यामहे ?)

(द्वितीयनेपथ्ये नूपुरध्वनिरालोकशब्दश्च)

**कपिञ्जलः**—(कर्णं दत्वा) कोऽयं कोलाहलः ?

**तरलिका**—भट्टिदारिआ अस्सत्थसरीरेत्ति अम्बाए उवट्ठिदाए होदव्वम् ।

(**छाया**—भर्तृदारिका अस्वस्थशरीरेति अम्बयोपस्थितया भवितव्यम् ।)

**महाश्वेता**—(कपिञ्जलाभिमुखी भूत्वा) भअवं, सव्वहा सखिणो मणोरहसंपादअं इमं जणं अवधारिअ साहेदु अग्गदो भवं ।

(**छाया**—भगवन्, सर्वथा सख्युर्मनोरथसम्पादकमिमं जनमवधार्य साधयत्वग्रतो भवान् ।)

**कपिञ्जलः**—किं बहुना ? तादृशस्य युवयोरनुरागस्यास्य चास्मदागमनस्य यदुचितं तत् त्वमेव वेत्सि ।

(इति उत्थाय परिक्रामति)

**महाश्वेता**—जाव अहं एव्व अम्बां पज्जुग्गमिअ पेसिदाए एदाए अत्तणो करणिज्जम्मि सज्जीभवेमि ।

(छाया—यावदहमेवाम्बां प्रत्युद्गम्य प्रेषितायामस्यामात्मनः करणीये सज्जीभवामि ।)

(इति तरलिकया सह निष्क्रान्ता)

कपिञ्जलः—अहो धिक् ; क्षते क्षारावसेचनमिवाधुना संवृत्तम् । यतः,

अयमापतितः प्रियावियोगः
सुहृदा दुर्विषहः स्मराभियोगः ।
उदयत्ययमिन्दुरप्युदंशु-
र्ज्वलयन्नुन्मसां मनो मयूखैः ॥ ४५ ॥

(परिक्रम्य) इदं हि तत्पुण्डरीकाधिष्ठितं लताभवनम् ।

(द्वितीयनेपथ्ये)

अये दुरात्मन् चन्द्रचण्डाल,

क्व नु तव गतस्तस्मिन् राहावयं करचण्डिमा
प्रकटयसि यं निर्दाक्षिण्यः प्रियारहिते मयि ।
विजहिहि वृथा निस्त्रिंशत्वं मयि त्वमयि पातकिन्
न कलयसि किं तादृक्तारावियोगविजृम्भितम् ॥ ४६ ॥

एवमेवामनुक्रोशंस्त्वमप्यनुभव जन्मनि जन्मनि प्रियाविरहखेदम् ।

कपिञ्जलः—(श्रुत्वा सावेगम्) कथं प्रलाप इव वर्तते सुहृदः । अनर्थस्यास्य मूलभूता महाश्वेतापि विलम्बते ।

(ततः प्रविशति वैहारिकवेषा महाश्वेता तरलिका च)

**महाश्वेता**—सहि, एदं सअमहिगमणसाहसलाहवं अणवेक्खन्तीए मए साहु कअं । अण्णहा नावसेसिज्जइ खु मे जीविअं रइपइणिसापईहिं ।

(छाया—सखि, एतत् स्वयमभिगमनसाहसलाघवमनवेक्षन्त्या मया साधु कृतम् । अन्यथा नावशिष्येत खलु मम जीवितं रतिपतिनिशापतिभ्याम् ।

**तरलिका**—किं कहिज्जइ ? चन्दोदयो णाम पञ्चमदसापवेसो पञ्चसरकुञ्जरस्स ।

(छाया—किं कथ्यते ? चन्द्रोदयो नाम पञ्चमदशाप्रवेशः पञ्चशरकुञ्जरस्य ।)

**कपिञ्जलः**—प्रियतमासमागमप्रत्याशया सुहृदमाश्वासयामि ।

(इति निष्क्रान्तः)

**महाश्वेता**—दिट्ठिआ पमअवणपक्खदुवारेण णिक्कमतीओ अह्मे केणवि ण पेक्खिओ ।

(छाया—दिष्ट्या प्रमदवनपक्षद्वारेण निष्क्रामन्त्यौ आवां केनापि न प्रेक्षिते ।)

**तरलिका**—उवदिसइ खु मम्महो एव्व मुद्धमहिलाणं पुडमाहिसारसाहसपरितोसिओ देसकालसमुइअं कज्जजादं ।

(छाया—उपदिशति खलु मन्मथ एव मुग्धमहिलानां प्रथमाभिसारसाहसपरितोषितः देशकालसमुचितं कार्यजातम् ।

(उभे परिक्रामतः)

**वैशम्पायनः**—आर्य वलाहक, ममेदानीम् ;

युगपदिव मिलन्ति यातना-
स्तमसि निमग्न इवास्मि दुस्तरे ।
हृदयमकृतकृत्यवच्चिरा-
दहह विमुह्यति किं करोम्यहम् ॥ ४७ ॥

**वलाहकः**—महाभाग, धैर्यमवलम्ब्यताम् । ननु स्वभाव एवैष रसभावानुभवेषु तन्मयीभावो भावुकानाम् । तथाच ध्वनिप्रस्थान-राद्धान्तिनोऽप्यामनन्ति—

"भावो भावान्तरच्छन्नः स्थास्नुः सूक्ष्मतयानिशम् ।
नाट्यकाव्यानुसन्धानात्प्रतिपत्तिषु लभ्यते ॥" ४८ ॥

त्वं तु प्रत्यासन्नजननोपलब्धविरहसंवित्तिरभिभूयसेऽमुना विर-हवैक्लव्यातिशयेन ।

**महाश्वेता**—(निमित्तं सूचयन्ती) किं उण भवे एदं ? दक्खिणं मे णअणं फुरणोम्मुहं होइ ।

(**छाया**—किं पुनर्भवेदेतत् ? दक्षिणं मे नयनं स्फुरणोन्मुखं भवति ।)

**तरलिका**—(स्वगतम्) ण खु भवे किं वि अच्चाहिदं पुण्डरीअस्स, ? उम्मत्तओ खु मअणसंदावो जीविअं वि हरइ विरहिलोअस्स ।

(छाया—न खलु भवेत् किमपि अत्याहितं पुण्डरीकस्य ? उन्मस्तकः खलु मदनसंतापः जीवितमपि हरति विरहिलोकस्य ।)

(उभे परिक्रामतः)

(द्वितीयनेपथ्ये)—

इदानीं पुष्पेषो हतक फलितं त्वद्व्यवसितं
किमिन्दो संधत्से मुनिवधमहापातकमिदम् ।
अनाथं त्यक्त्वा मामद्यमपयासि क्व नु सखे
महाश्वेते मृत्युस्त्वमसि मम मित्रस्य नियतम् ॥ ४९ ॥

**महाश्वेता**—(आकर्ण्य सावेगम्) तरलिए, किं एदं ? हा हदह्मि मन्दभाइणी ।

(छाया—तरलिके, किमेतत् ? हा हतास्मि मन्दभागिनी ।)

**तरलिका**—तुरिअं आअच्छ । पेक्खह्म विहिविलसिआइं ।

(छाया—त्वरितमागच्छ । पश्यामो विधिविलसितानि ।)

(उभे त्वरितपदं गच्छतः)

(ततः प्रविशति अङ्कावस्थापितपुण्डरीकशरीरः प्रलपन् कपिञ्जलः)

**कपिञ्जलः**—

हा मातः कमले हतासि विधिना पापेन नीतः सुतो
वात्सल्यं तव तात कुत्र भविता हा श्वेतकेतो मुने ।
हा सख्युर्मम पुण्डरीक लपतो दत्से कथं नोत्तरं
सा विद्या तव तत्तपः क्व नु पुनर्मैत्री च सा संभवेत् ॥५०॥

**वलाहकः**—अहो ! विशृङ्खलाः कवयः ; यैरारोप्यते तेष्वपि जीवितोपरमः ।

**कपिञ्जलः**—(दृष्ट्वा) भद्रे गन्धर्वराजपुत्रि पुण्डरीकमनोरथप्रिये महाश्वेते,

एहि प्रसादयैनं मानयति वचस्तवैष दयितायाः ।
अयि पश्य बद्धमौनः समयमियन्तं विलम्बिता त्वमिति ॥५१॥

**महाश्वेता**—तरलिए, हा हदह्मि मन्दभाइणी ; जं एसो उम्मूलिओ विअ बालमन्दारो णाहपुण्डरीओ अय्यकइञ्जलेण अङ्के धारीअदि ।

(**छाया**—तरलिके, हा हतास्मि मन्दभाग्या ; यदेष उन्मूलित इव बालमन्दारो नाथपुण्डरीक आर्यकपिञ्जलेनाङ्के धार्यते ।)

(इति मुह्यति)

**तरलिका**—आस्ससिदु भट्टिदारिआ । निद्दामेत्तणिमीलिअणअणेण होदव्वं महाभाएण । ता ण सङ्किदव्वं अमङ्गलम् ।

(**छाया**—आश्वसितु भर्तृदारिका । निद्रामात्रनिमीलितनयनेन भवितव्यं महाभागेन । तत् न शङ्कितव्यममङ्गलम् ।)

**महाश्वेता**—(कथंचिदाश्वस्य) हा णाह, सच्चं सवामि दे पअपङ्कअप्पस्सेण । तुज्झ असंगमणदुक्खेणेव्व मए ओवाहिदो दिअहो । पसीद । मुञ्चेहि सुअणवअणित्तणप्पदं एदं । एसो दे अञ्जली ।

(पादयोर्निपत्य) अहवा किं एदेहि णिरत्थएहिं पलावेहिं ? तरलिए, पदीवेहि अग्गि। अणुसरित्तव्वो मए णाहो।

(छाया—हा नाथ, सत्यं शपे तव पादपङ्कजस्पर्शेन। तवासंगमनदुःखेनैव अतिवाहितो दिवसः। प्रसीद। मुञ्च सुजनवचनीयतास्पदमेतत्। एष तेऽञ्जलिः। अथवा किमेतैः निरर्थकैः प्रलापैः। तरलिके, प्रदीपयाग्निम्। अनुसर्तव्यो मया नाथः।)

**तरलिका**—(सबाष्पम्) कहं ईरिसे कम्मम्मि सहित्तणं मे उवअरणीकअं देव्वहअएण। होदु, एव्वं कदुअ पच्चा मएवि परिच्चज्जइ एव्व जीविअं।

(छाया—कथमीदृशे कर्मणि सखित्वं मे उपकरणीकृतं दैवहतकेन। भवतु, एवं कृत्वा पश्चान्मयापि परित्यज्यत एव जीवितम्।)

**बलाहकः**—(पार्श्वतोऽवलोक्य) कथं प्रमुग्ध एवाद्यापि वैशम्पायनः। अथवा, साधु संवृत्तम्; यदमुना तावतैव मृदूभवन्मनसा न दृश्यते महानयं करुणः। (ऊर्ध्वमवलोक्य) कुत इदमतिभास्वरमपि शिशिरस्पर्शं ज्योतिर्दिवोऽवतरति ?

(निरूप्य)

अये कोऽयं स्रग्वी मणिखचितकल्याणमकुटो
वहन्वक्षस्येकावलिममलतारालितरलाम्।
वसानः संव्यानं तुहिनशुचि कर्पूरतिलको
युवा दिव्याकारोऽवतरति महीमम्बरतलात्॥ ५२॥

(प्रविश्य)

**दिव्यपुरुषः**—वत्से महाश्वेते, न परित्याज्यास्त्वया प्राणाः। अवश्यं भूयोऽपि भवितैव भवत्याः समागममहोत्सवोऽनेन।

(इति पुण्डरीकमुत्क्षिप्याकाशोत्पतनं रूपयति)

**महाश्वेता**—(सभयशोकाश्चर्यम्) भअवं कइञ्जल, किं एदं इन्दजालं विअ?

(**छाया**—भगवन् कपिञ्जल, किमेतदिन्द्रजालमिव?)

**कपिञ्जलः**—(सरोषसंभ्रमम् आबद्धजटापरिकरा भूत्वा) अरे दुरात्मन्, तिष्ठ तिष्ठ। क्व मे वयस्यमपहरसि? (इत्युत्पतन्निवृत्य) भद्रे गन्धर्वराजनन्दिनि, अयमहं भवतीम्;

पुनरपि यत्ने घटयितुं सुहृदा लोकान्तरं गतेनापि।
अहरुपगमः कमलिनीमस्तमितेनेव सूर्येण॥ ५३॥

(इति दिव्यपुरुषमनुसरन् निष्क्रान्तः)

**बलाहकः**—हन्त! महदिदमरुंतुदं हंसदुहितुः।

इत्थं जाते प्रणयिनि जने केवलं युज्यतेऽस्याः
प्राणत्यागो रचयितुमयं कल्पते विश्रमाय।
आशाबन्धं द्रढयति विधेः संविधेयं विचित्रा
तत्किं वान्यत्पुनरुपनतो दीर्घशोकानुबन्धः॥ ५४॥

**तरलिका**—(सदैन्यं महाश्वेतायाः पादयोर्निपत्य) भट्टिदारीए, पसीद; मुञ्चेहि इमं ववसाअं। असंसअं चन्दमण्डलादो णिग्गएण

चन्देणेव्व कलुणपरवसेण मम्महज्जरकिलन्तो महाभाअपुण्डरीओ तुह संबन्धादो आसासइदुं णीदो अत्तणो लोअं।

(छाया—भर्तृदारिके प्रसीद; मुञ्चामुं व्यवसायम्। असंशयं चन्द्रमण्डलान्निर्गतेन चन्द्रेणैव करुणपरवशेन मन्मथज्वरक्लान्तः महाभागपुण्डरीकः तव संबन्धात् आश्वासयितुं नीत आत्मनो लोकम्।)

**महाश्वेता**—अपेहि; दुल्लहसहिजीविदे, कअं दे अघडिदाहिं मणोरहपरंपराहिं।

(छाया—अपेहि; दुर्लभसखीजीविते, कृतं ते अघटिताभिर्मनोरथपरंपराभिः।)

**तरलिका**—सहि, मा एव्वं मन्तेहि। अवगच्छ अत्ताणं चन्दकिरणभवाणं अच्चराणं कुले लद्धजणणम्।

(छाया—सखि, मैवं मन्त्रयस्व। अवगच्छात्मानं चन्द्रकिरणोद्भवानामप्सरसां कुले लब्धजननम्।)

**महाश्वेता**—कहं तारिसे तस्सिं महाभाए दिट्ठिअगोअरं गमिदेवि मए गआसाए जीविअं धारीअइ?

(छाया—कथं तादृशे तस्मिन्महाभागे दृष्ट्यगोचरं गमितेऽपि मया गताशया जीवितं धार्यते?)

**तरलिका**—अण्णच्च, जइ सो एव्व दिव्वपुरिसो अय्यकइञ्जलो वा पच्चाणीदजीविदं दे अहिमदं एत्थ आणेदि तदा कहिं?

(छाया—अन्यच्च, यदि स एव दिव्यपुरुष आर्यकपिञ्जलो वा प्रत्यानीतजीवितं ते अभिमतमत्रानयेत् तदा कथम्?)

**वलाहकः**—अये! सख्या प्रदर्शितेऽपि प्रत्याशावकाशे चिरानुभव-दुःसहतया वियोगस्य नितरां खिद्यते गन्धर्वराजपुत्री। तथाहि—

निशावसाने नियतं प्रियेण
प्राप्ता पुनस्ताम्यति चक्रवाकी।
न वेत्ति किं शुष्यति हन्त शोकात्
प्रेम्णः स्वभावो हि धृतेरभावः॥ ५५॥

**महाश्वेता**—किं करेमि उच्छिण्णभाअहेआ, जाए सच्छन्ददो दइआणुगमो वि दुल्लहो जादो। होदु; जावकइञ्जलागमणं एत्थ णाहस्स एदेहिं एव्व तवच्चरणोवअरणेहि पुडमोवणदाए इमाए एव्व अक्खमा-लिआए तस्स संगमणिमित्तं सणिअमा वट्टिस्सं। तरलिए, ण उण तुए बन्धुगुरुअणेहिं वा अहं णिवारइदव्वा।

(**छाया**—किं करोम्युच्छिन्नभागधेया, यस्याः स्वच्छन्दतो दयितानु-गमोऽपि दुर्लभो जातः। भवतु; यावत्कपिञ्जलागमनमत्र नाथस्यैतैरेव तपश्च-रणोपकरणैः प्रथमोपनतया अनयैवाक्षमालिकया तस्य संगमनिमित्तं सनियमा वर्तिष्ये। तरलिके, न पुनस्त्वया बन्धुगुरुजनैर्वा अहं निवारयितव्या।)

**तरलिका**—इमस्सिं अच्छोअम्मि एव्व सव्वंवि आणइस्सं। करेहि दाव तुमं जीविअधारणम्।

(**छाया**—अस्मिन्नच्छोद एव सर्वमप्यानयिष्यामि। कुरु तावत्त्वं जीवितधारणम्।)

**महाश्वेता**—ता आदिस मग्गं अच्छोअअस्स। जहिं कअणि-अममज्जणाए मए इमस्सिं एव्व खणे धारिदव्वाइ अज्जउत्तधारिदपुव्वाइ कप्पदुमवक्कलाइ।

(छाया—तस्मादादिश मार्गमच्छोदस्य । यत्र कृतनियममज्जनया मया अस्मिन्नेव क्षणे धारितव्यानि, आर्यपुत्रधारितपूर्वाणि कल्पद्रुमवल्कलानि।)

(इति तरलिकया सह निष्क्रान्ता)

**वलाहकः**—अमात्य वैशम्पायन, सत्त्वसंस्थो भव।

(इति करेण चालयति)

(प्रथमनेपथ्ये शङ्खध्वनिः)

**वलाहकः**—अहो कालातिपातः।

निद्रामुद्रां विधून्वन् सुभटमृगदृशां भोगलीलारसाना-
मर्धोन्मीलन्निमीलन्नयनमिह जनैर्नूनमाकर्ण्यमानः।
संभिन्नस्तूर्यनादैः समसमयसमुज्जृम्भितैर्यामिकाना-
मारात्तारावतारः पिशुनयति निशायौवनं शङ्खनादः॥ ५६॥

**वैशम्पायनः**—(कथंचित्प्रत्यापन्नचैतन्य इव) अहह! महति संकटे पतितोऽस्मि। यतः—

विस्मृत्य यत्किमपि चिन्तयतीव चेतः
पश्यामि संस्तुतमसंस्तुतवत्समस्तम्।
प्रच्छन्नपापकृदिवानुशयेन दूये
किं भूयसाहमपि नाहमिवावभासे॥ ५७॥

**वलाहकः**—(नेपथ्यं प्रति) भो भोः किंपुरुषवर्षवास्तव्या रङ्गोपजीविनः,

शाकुन्तलादीनि पुरापि ताव-
न्निरूपितान्येव हि *रूपकाणि ।
ततोऽप्यमुष्मिन्सुतरां प्रयोगे
चमत्क्रिया नर्तयतीव चेतः ॥ ५८ ॥

उपसंह्रियतां नाट्यम् । श्वो वः प्रयोगशेषं द्रक्ष्यामः ।

(नेपथ्ये)

तदिदमनुष्ठीयते यदभिरुचितमार्यमिश्राणाम् ।

**वलाहकः**—अमात्य, अतः परमभ्यन्तरं प्रविश्य विश्राम्यतु भवान् । अहं तावत् भौरिकहस्तेन संभावयिष्ये दिव्यनटबृन्दम् ।

**वैशम्पायनः**—(उत्थायात्मगतम्) न खलु नाट्यदर्शनमात्रा-दीदृशं वैक्लब्यम् ।

निमित्तं चित्तविकृतेर्मम किं सर्वविभ्रमः ।
किं मनोरथसांतत्यं किं वा जन्मान्तरस्मृतिः ॥ ५९ ॥

(इति ध्यानमन्दं परिक्रामति)

**वलाहकः**—(स्वगतम्) ननु प्रातरेव स्वस्थहृदयायास्मै निवेद्य प्रेषणीया तावन्मेघनादेन साकं पत्रलेखा युवराजान्तिकम् ।

(इति निष्क्रान्ताः सर्वे)

**पञ्चमोऽङ्कः** ॥



# षष्ठोऽङ्कः ।

(प्रविश्य)

**विदूषकः**—हद्धि हद्धि, चिरआलाणुहूदविअअसंचारो दाणिं पडिणिउत्तो वअस्सोत्ति एत्तिएण वि मे ण णिव्वई होइ। जदो इमो पुरूरवो विअ उव्वसिं दिव्वदेसगअं काअम्बरीं कामेन्तो रत्तिंदिवं वि मं अब्भवहारेसु वि णिरवआसं उवरुज्झइ। एदं उण किंवि अच्चेरं जं तह विप्फुरन्तो वि गुरुअणभआदो सिसिरोवआरं वि ण गेह्णइ। केवलं किंपुरिसवरिसपुरोहि पच्चा.आए तम्बोलकलङ्कवाहिणीए बहुसो भणिज्जन्तं काअम्बरीसंदेसं एव्व आअण्णन्तो जीविअं धारेदि। ता दाणिं कहिं इमो वट्टइत्ति को मए पुच्छिदव्वो? (नेपथ्याभिमुखं दृष्ट्वा) एसा खु अम्बाए विलासवईदेवीए पच्चणन्तरा मअरिआ णाम महत्तरिआ णिक्कमइ कुमारभवणादो। तं पुच्छिस्सं। (नेपथ्यं प्रति) मअरिए, कहिं वअस्सो? (श्रवणमभिनीय) किं भणसि, कोवि समओ तस्स बहिव्विहरत्थं णिग्गदस्सेत्ति। होदु, अहं वि तहिं एव्व गमिस्सिस्सं। (इति निवृत्य) णूणं भद्दजडाअदणपज्जन्तप्पमअवणम्मि विवित्ते अत्ताणं विणोदेदुं इच्छदित्ति तक्केमि। जाव से पासवट्टी होमि।

**(छाया—हा धिक् हा धिक्, चिरकालानुभूतविजयसंचार इदानीं प्रतिनिवृत्तो वयस्य इत्येतावतापि मे न निर्वृतिर्भवति। यतोऽयं पुरूरवा इवोर्वशीं दिव्यदेशगतां कादम्बरीं कामयमानो रात्रिंदिवमपि मामभ्यवहारेष्वपि**

निरवकाशमुपरुणद्धि । एतत्पुनः किमप्याश्चर्यं यत्तथा विस्फुरन्नपि गुरुजनभयाच्छिशिरोपचारमपि न गृह्णाति । केवलं किंपुरुषवर्षपुरात् प्रत्यागतया ताम्बूलकरङ्कवाहिन्या बहुशो भण्यमानं कादम्बरीसंदेशमेवाकर्णयन् जीवितं धारयति । तदिदानीमयं कुत्र वर्तत इति को मया प्रष्टव्यः ? एषा खल्वम्बाया विलासवतीदेव्याः प्रत्यनन्तरा मकरिका नाम महत्तरा निष्क्रामति कुमारभवनात् । तां प्रक्ष्यामि । मकरिके, कुत्र प्रियवयस्यः ? किं भणसि—कोऽपि समयस्तस्य बहिर्विहारार्थं निर्गतस्येति । भवतु, अहमपि तत्रैव गमिष्यामि । नूनं भद्रजटायतनपर्यन्तप्रमदवने विविक्ते आत्मानं विनोदयितुमिच्छतीति तर्कयामि । यावदस्य पार्श्ववर्ती भवामि ।)

(निष्क्रान्तः)

विष्कम्भकः ।



(ततः प्रविशति पत्रलेखाविदूषकाभ्यामनुगतश्चन्द्रापीडः)

चन्द्रापीडः—(स्वगतम्)

सर्वोर्वीजयिना निवृत्य चरणौ तातस्य दृष्टौ चिरा-
दम्बाया हृदि वीरसूरहमिति प्रीतिर्मयोद्भाविता ।
ऐश्वर्यं प्रणयी जनः समुचितो नीतो ममेदं पुन-
श्चेतश्चैत्ररथीवियोगविधुरं वैयाकुलीमश्नुते ॥ १ ॥

विदूषकः—वअस्स, णिज्जिअचउद्दिसो कुलराअधाणीए बन्धुमज्झे वसन्तो वि कीस तुमं विमणाअन्तो विअ पडिहासि ?

(छाया—वयस्य, निर्जितचतुर्दिशः कुलराजधान्यां बन्धुमध्ये वसन्नपि कस्मात्त्वं विमना इव प्रतिभासि ?)

**पत्रलेखा**—मूढ, कहं बहिरत्तणं विअ दे अत्थि ; जदो अणुदिअहं कहिज्जन्ते वि जुवराएण हिअअसंदावकालणे पुणो पुणो वि पुच्छसि ।

(छाया—मूढ, बधिरत्वमिव तेऽस्ति ; यतोऽनुदिवसं कथ्यमानेऽपि युवराजेन हृदयसंतापकारणे पुनः पुनः पृच्छसि ।)

**विदूषकः**—वअस्स, कहेहि तं पुणो वि ; जं दाणिं अवधारिअ बहिरिअदोसं पमज्जिस्सं ।

(छाया—वयस्य, कथय तत् पुनरपि ; यदिदानीमवधार्य बाधिर्यदोषं प्रमाक्ष्यामि ।)

**चन्द्रापीडः**—सखे, कथमविदितवृत्तान्त इव चेष्टसे ?

ताताज्ञागौरवाद्देव्यै न निवेद्यागतोऽस्मि यः ॥
तस्याद्य न कथं नाम सानुतापं भवेन्मनः ॥ २ ॥

**विदूषकः**—णं तुमं अक्खित्तहिअओसि गन्धव्वराअउत्तीए ।

(छाया—ननु त्वमाक्षिप्तहृदयोऽसि गन्धर्वराजपुत्र्या ।)

**पत्रलेखा**—अह्मो! दोणं वि तुह्माणं एव्वं अण्णोण्णादिसाइणी अणुराअसमवत्था कहं परिणमिस्सदित्ति ण जाणामि ।

(छाया—अहो ! द्वयोरपि युवयोरेवमन्योन्यातिशायिनी अनुरागसमवस्था कथं परिणंस्यतीति न जाने ।

**चन्द्रापीडः**—(निश्वस्य)

देशाद्दवीयसोऽपि प्रणयिजनत्वरितमेलनमनोज्ञः ।
केषांचिदेव हि फलेन्मनोरथः पुण्यपरिणामैः ॥ ३ ॥

तत् केदानीं विनोदनीयं मनः ?

**पत्रलेखा**—कहिं दाणिं विलम्बइ अय्यकेलासो ?

(**छाया**—कथमिदानीं विलम्बते आर्यकैलासः ?)

**विदूषकः**—किं सो णिउत्तो उज्जणसोहणम्मि ।

(**छाया**—किं स नियुक्त उद्यानशोधने ?)

**चन्द्रापीडः**— अथ किम् ।

(प्रविश्य)

**कञ्चुकी**—यावदनुष्ठितं निदेशमावेदयामि युवराजाय ।

(उपसृत्य) कुमार, प्रत्यवेक्षिता मयैताः शीतलकल्लोलमारुतानर्तितशिरीषकेसरोत्पतितचञ्चरीककुलाः काञ्चनाराशोकसरलसहकारप्रायतरुगहनान्धकारितदिशः सिप्रातटोद्यानभूमयः ।

**चन्द्रापीडः**—आर्य कैलास,

बालोद्यानप्रहितसलिलाः सर्वतः सारणीभिः
श्रेणीभूतैर्विहितवृतयः केतकीनां प्रतानैः ।
आलोक्यन्ते ननु तटभुवः स्निग्धवानीरकुञ्ज-
क्रीडत्पारावतकलरवस्मेरपौरार्धदृष्टाः ॥ ४ ॥

तद्भवतैष यावदस्मन्निष्क्रमणमानुयात्रिको जनः सर्वोऽपि बहिरुद्यानादवस्थापनीयः ।

**कञ्चुकी**—यदादिशति युवराजः ।

(इति निष्क्रान्तः)

**चन्द्रापीडः**—(अन्तःप्रवेशनाटितकेन)

तनुपवनचलत्तरङ्गडोला-
विहरणलालसराजहंसयूथम् ।
विकसितकमलोत्पलं विधत्ते
सलिलमिदं सरितः कुतूहलं नः ॥ ५ ॥

**पत्रलेखा**—जुवराअ, एदं पाडललआब्भन्तरे फडिअसिलापट्टअं । एत्थ णिसीअदु भवं ।

**(छाया—युवराज, एतत्पाटललताभ्यन्तरे स्फटिकशिलापट्टकम् । अत्र निषीदतु भवान् ।)**

(सर्वे उपविशन्ति)

**चन्द्रापीडः**—(क्षणमात्रं स्थित्वा स्वगतम्) अयि असन्तुष्ट हृदय, किमेवमहमिवाकृतार्थमसि?

त्वं भृङ्गश्रियमश्नुषे चरणयोर्हंसस्य लीलायितं
श्रोण्यामाद्रियसे चकोरसुलभं पुष्णासि हर्षं मुखे ।
तस्याश्चातककौतुकं च चिकुरस्तोमे यदालम्बसे
तत्किं वान्यदतः परं तव भवत्याशंसनीयं मनः ॥ ६ ॥

**विदूषकः**— णूणं दाणिं वि कड्ढीअइ इमो उक्कण्ठाणईपूरेण। ता कहं से करीअइ पज्जवत्थावणम्?

(छाया—नूनमिदानीमपि कृष्यतेऽयं उत्कण्ठानदीपूरेण। तत्कथमस्य क्रियेत पर्यवस्थापनम्?)

**पत्रलेखा**— देवीए पसङ्गं विणा किं उण से अण्णं हिअआवक्खेवकालणं होइ?

(छाया—देव्याः प्रसङ्गं विना किं पुनरस्यान्यत् हृदयावक्षेपकारणं भवेत्?)

**चन्द्रापीडः**—पत्रलेखे, साधु दृष्टवत्यसि। तथाहि—

देशान्तरितयोर्यूनोरन्योन्यमनुरागिणोः।
आलापसौख्यं सन्देशैरालेख्यैरवलोकनम्॥ ७॥

तदानय लिखितशेषां चित्रपटीं वर्णतूलिकाश्च।

**पत्रलेखा**—(करङ्कादादाय प्रसारयति)

**चन्द्रापीडः**—(गृहीत्वा) सखायौ, पश्यतमितः।

श्रीमण्टपं लिखितमत्र महार्हमेतत्
कादम्बरी विलिखिता ससखीजनेयम्।
ह्रीयन्त्रणानियतयापि तया कटाक्षैः
पाशैर्निबद्ध इव चालिखितो जनोऽयम्॥ ८॥

**पत्तलेखा**—देवेण दंसिअं सिप्परअणाणेउणं देट्ठूण तक्केमि देवेण वि ण पुणो एव्वं लेहिदुं पारीयदित्ति।

(छाया—देवेन दर्शितं शिल्परचनानैपुणं दृष्ट्वा तर्कयामि देवेनापि न पुनरेवं लेखितुं पार्यैतेति ।)

चन्द्रापीडः— तथैव मे निष्कर्षः यथा भवत्याह । किंतु,

आदावम्बुरुहं सुजङ्घमनु तद्रम्भा नितम्बाश्रया
पश्चाद्व्योम सरोमवल्लरि ततः कुम्भौ भुजालंकृतौ ।
अन्वग्बिम्बमुदञ्चिताधरमधो नेत्राङ्कितं कार्मुकं
तस्मात्कैशिकवान् मृगाङ्क इति मे शक्यं पुनर्लेखितुम् ॥९॥

विदूषकः—वअस्स, अहं उण एव्वं तक्केमि । दे चित्तवट्टिणी चित्तरहणन्दिणी मअणग्गिसंदाविदादो दे हिअअकमलादो चित्तच्छलेण भुजणालमग्गादो णिग्गदेत्ति । ता किं अदो वरं अवसिट्ठं लेहिदव्वस्स ।

(छाया—वयस्य, अहं पुनरेवं तर्कयामि । ते चित्तवर्तिनी चित्ररथनन्दिनी मदनाग्निसन्तापितात् ते हृदयकमलात् चित्रच्छलेन भुजनालमार्गतो निर्गतेति । तत्किमतः परमवशिष्टं लेखितव्यस्य ।)

चन्द्रापीडः—अयमालिख्य दर्शयामि (इति तथा कृत्वा हस्तेन दर्शयन्)

सोऽयं क्रीडागिरिरिह तथा सा च सौधाग्रेयं
सेयं सौम्या कुमुदसरसी सा समीपे ममेयम् ।
तद्भोगार्हं हिमगृहमिदं ताविमौ स्वैरमावां
कामो दैवात्समजनि ययोः प्रेमसान्द्रोऽपि मोघः ॥ १० ॥

(प्रत्यक्षवच्चित्रगतां प्रियां प्रति)

त्वयि कृतपदस्तापो नूनं हठात्परिरम्भणा-
न्मम तु सुदृढं गात्रे संक्रान्त एष विजृम्भते ।
तदुपनय मे वामे बिम्बाधरामृतपारणां
मदसुहरणोद्दामः कामः प्रशाम्यति नान्यथा ॥ ११ ॥

**पत्रलेखा**—(स्वगतम्) कहं पच्चक्खं एव्व मण्णइ देवो सव्वं वि एदं । (चित्रफलकमादाय) देव, अलं इमाए चित्तगआए देवीए । एस देवीए सहत्थलिहिओ संदेसो । तं णिरूवेहि ।

(**छाया**—कथं प्रत्यक्षमेव मन्यते देवः सर्वमप्येतत् । देव, अलमनया चित्रगतया देव्या । एष देव्या स्वहस्तलिखितः संदेशः । तं निरूपय ।)

**चन्द्रापीडः**—तर्हि, प्रियानुस्मरणसंभृतैरश्रुभिरापूर्यते मे नयनम् ; त्वमेव मे निषिञ्च कर्णयोरमृतम् ।

• **विदूषकः**—पढिदपुव्वो खु इमो संदेसो। कीस पच्चग्गपेसिओ विअ सबहुमाणं दाणिं पढिज्जइ ?

(**छाया**—पठितपूर्वः खल्वयं संदेशः। किमिति प्रत्यग्रप्रेषित इव सबहुमानमिदानीं पठिष्यते ?)

**चन्द्रापीडः**—मूर्ख, नित्यं हृदयंगमो हि प्रसङ्गः प्रणयिजनस्य । पश्य,

दृष्टं यद्यपि तन्मुखं द्विगुणया जातं दृशोर्वाञ्छया
स्पृष्टं यद्यपि नाम तद्वपुरिमौ बाहू कथं तृप्यतः ।
पीतं यद्यपि तद्वचोमधु मुहुर्नैने वितृष्णे श्रुती
निर्वेशैः क्षणिकैर्न मेऽभिरमते गाढानुरागं मनः ॥ १२ ॥

**पत्रलेखा**—(भूर्जपत्रमादाय नाट्येनोद्वेष्टयति)

**विदूषकः**—जइ मए तिमिरन्धदिट्ठिणा ण होइज्जइ, तदा अहं एव्व वाअअन्तो एदाए विअड्ढत्तणगव्वं अवहरिस्सिस्सं।

(छाया—यदा मया तिमिरान्धदृष्टिना नाभविष्यत, तदा अहमेव वाचयन् एतस्या विदग्धतागर्वमपाहरिष्यम्।)

**पत्रलेखा**—(सस्मितं वाचयति)

"केत्तिअमेत्तं सहिअउ पच्चाशाधरिअपाणए दुक्खं।
जं अणुहोज्जन्तं अवि खणे खणे णवणवं होइ॥ १३॥
सुलहो खु इत्थिआणं विरहे आलेक्खवल्लहो होइ।
मम उण सो वि ण सुलहो बप्पुग्गमपुण्णणअणाए॥" १४॥

(छाया—"कियन्मात्रं सह्यतां प्रत्याशाधृतप्राणया दुःखम्।
यदनुभूयमानमपि क्षणे क्षणे नवनवं भवति॥
सुलभः खलु स्त्रीणां विरहे आलेख्यवल्लभो भवति।
मम पुनः सोऽपि न सुलभो बाष्पोद्गमपूर्णनयनायाः॥"

**चन्द्रापीडः**—

वैलक्ष्यं परिहाय चेन्मृगदृशा संदिष्टमेवं तया
तर्हि प्लावितमस्तु नाम भुवनं रागार्णवेन क्षणात्।
ज्योत्स्नाचन्दनशीधुकोकिलमुखा दीव्यन्तु निर्यन्त्रणं
सर्वत्रोर्जितशासनो विजयतां कामोऽपि धन्वी चिरम्॥१५॥

**पत्रलेखा**—मए वि देवो पुच्छिदव्वो किं जुत्तमिदं तारिसदसाए देवीए उवेक्खणं आवण्णाणुकम्पिणो देवस्सेत्ति।

(छाया—मयापि देवः प्रष्टव्यः किं युक्तमिदं तादृशदशाया देव्या उपेक्षणमापन्नानुकम्पिनो देवस्येति ।)

**चन्द्रापीडः**—उचितमनुशिष्टोऽस्मि । तथाहि—

वामभ्रुवो विलसितानि तदा तदा मे
भावावबोधनपराणि न कान्यभूवन् ।
स्वाभाविकानि किल तान्यपि शङ्कमानो
दूरीकृतोऽस्मि विधिनैष मनोरथानाम् ॥ १६ ॥

किंच, प्रत्यक्ष एव किल युवयोरपि हिमगृहवृत्तान्तः ।

विदितमनसा वाक्यैः साकूतवक्रिमगर्भितैः
कथमपि सखीवर्गेणावामुभौ गमितौ रहः ।
किमपि ललितं गाढप्रेम्णा मया पुनरीप्सितं
कुवलयदृशः प्रत्यूहोऽभूत्स केवलमाग्रहः ॥ १७ ॥

**पत्रलेखा**—दिणे दिणे परिहिज्जमाणगत्ता लावण्णमेत्तसेसा इअं मासेदाए सपाअपअणं सन्तवअणेहिं कहं वि मोइअपडिण्णाणिब्बन्धा सअं एव्व इमं संदेसं विलिहिअ मम हत्थम्मि दत्तूण मां पेसिदवदी तुमं खन्धावारादो एव्व पडिणिवट्टेदुं ।

(छाया—दिने दिने परिहीयमानगात्रा लावण्यमात्रशेषेयं महाश्वेतया सपादपतनं सान्त्ववचनैः कथमपि मोचितप्रतिज्ञानिर्बन्धा स्वयमेव विलिख्येमं संदेशं मम हस्ते दत्वा प्रेषितवती त्वां स्कन्धावारादेव प्रतिनिवर्तयितुम् ।)

**चन्द्रापीडः**—हन्त ! हस्तगतमपि मे नियतिवात्यया प्रभ्रंशितं भागधेयफलम् ।

विदूषकः—किं अदिक्कन्दम्मि अणुदावेण ?

(छाया—किमतिक्रान्तेऽनुतापेन ?)

चन्द्रापीडः—भवतु,

प्रयतेऽभिवाञ्छितमिदं प्राणैरपि सर्वथैव पूरयितुम् ।
किंतु सुकुमारमस्याः शरीरमनुचिन्त्य वेपते चेतः ॥ १८ ॥

विदूषकः—ण दाव अण्णारिसं किं वि मण्णिदव्वं । जीविअं धारअइ खु अहिमदसमाअमाहिलासो ।

(छाया—न तावदन्यादृशं किमपि मन्तव्यम् । जीवितं धारयति खलु अभिमतसमागमाभिलाषः ।)

चन्द्रापीडः—(अन्यतो दृष्ट्वा) पत्रलेखे, ननु पश्यसि नालिकेरवनान्तान्महाकालायतनगोपुरद्वाराभ्याशे दूरादागतमितो महदाश्चर्यमाढौकते ।

विदूषकः—णूणं खन्धावारादो परापअन्तेण भडणिकुरुम्बेण होदव्वं ।

(छाया—नूनं स्कन्धावारात् परापतता भटनिकुरुम्बेण भवितव्यम् ।)

पत्रलेखा—(निरूप्य) जुवराअ, जो इमो अग्गेसरो तुरअसाइआणं छत्तवारिदादवो परापतइ, मण्णे सो देवीपरिआरओ केऊरओत्ति ।

(छाया—युवराज, य एषोऽग्रेसरस्तुरगसादिनां छत्रवारितातपः परापतति, मन्ये स देवीपरिचारकः केयूरक इति ।)

• चन्द्रापीडः—नास्त्यविषयो नामाशंसनीयानाम् । (नेपथ्यं प्रति) कः कोऽत्र भोः ?

(प्रविश्य)

कञ्चुकी—आज्ञापयतु युवराजः ।

चन्द्रापीडः—केऽप्यत्र समागच्छन्ति । भवानिहस्थितानस्मानावेद्य तेषामग्रण्यमितः प्रापयतु ।

कञ्चुकी—तथा (इति निष्क्रान्तः)

(प्रविश्य)

केयूरकः—(उपसर्पन्) अये ! कथमात्मनातृतीयो देवश्चन्द्रापीडोऽयमुपांशु वर्तते । य एषः,

उरसि कलयंस्तामेवैकावलिं प्रिययार्पितां
कथितहृदयावस्थः क्षामावपाण्डुभिरङ्गकैः ।
द्विप इव मदक्षीणः शोभाविशेषभृशोज्ज्वलो
वितरति मयि प्रत्यासन्ने प्रसादमयीं दृशम् ॥ १९ ॥

चन्द्रापीडः—अये ! केयूरकः प्राप्तः ।

केयूरकः—जयतु देवः । (प्रणमति)

चन्द्रापीडः—भद्र, स्वागतं ते ।

केयूरकः—इदानीं देवपादावलोकनमहोत्सवेन ।

(परिवृत्य पत्रलेखाविदूषकौ प्रति यथोचितं समुदाचरति)

चन्द्रापीडः—अपि कुशलिनी ससखीजना देवी ?

केयूरकः—एवमनावेद्य प्रस्थितस्य देवस्य शोभते देवीं प्रति कुशलसंप्रश्नः ।

चन्द्रापीडः—(साशंसम्) न खलु तावदत्याहितं किमपि ?

केयूरकः—न किंचिदन्यत् । अधुना विधार्यते जीवितं देव्या ।

चन्द्रापीडः—किं वा प्रतिपन्नमनिमित्तसौहृदया महाश्वेतया ?

केयूरकः—देव, पत्रलेखां स्कन्धावारमनुप्रेष्य प्रतिनिवृत्तेन मया यदा निवेदितो देवस्यातर्कितोपगतोऽयमुज्जयिनीगमनवृत्तान्तः, तदा विषादम्लानवदनां देवीं विभाव्य किंकर्तव्यतामूढहृदया स्वयमेवाश्रमपदं प्रस्थिता महाश्वेता ।

चन्द्रापीडः—हा हतात्मन् चन्द्रापीड चण्डाल, एवं नामावपातनीयस्त्वया विश्वस्तेषु सौहार्दवज्रघातः ।

विदूषकः—भो कहेहि । तदो पहुदि कीरिसी पवुत्ती चित्तरहणन्दिणीए ?

(छाया—भोः कथय। ततः प्रभृति कीदृशी प्रवृत्तिश्चित्ररथनन्दिन्याः ?)

केयूरकः—ततः परं, देवस्यैव शपे चरणपङ्कजेन,

आहूता न शृणोति न प्रियसखीरप्यादरात्पश्यति
व्याहारेषु विलक्षतामवतरत्यन्यादृशैरक्षरैः ।

यातुं क्वापि कृतोद्यमा विरचयत्यन्यत्र यात्रामियं
प्राणानामपि धारणाय भजते दीर्घामुदासीनताम् ॥ २० ॥

अपिच,

मुहुरुपचिताशंसा श्रीमण्डपे निवसत्यसौ
चरति परितः क्रीडाशैलं कुतूहलिनी किल ।
गृहकुमुदिनीतीरे दृष्टिं ददाति दराविलां
हिमगृहमनु प्राप्ता निश्वस्य रोदिति केवलम् ॥ २१ ॥

चन्द्रापीडः—(निश्वस्य)

क्व तन्नवमृणालिकामृदुलमङ्गकं सुभ्रुवः
क्व वज्रपरुषोद्यमा विषमसायकस्येषवः ।
किमद्य परिदेवितैर्गतघृणेन कष्टं मया
दवानलनिपातिता चिरमुपेक्षिता मालती ॥ २२ ॥

(इति बाष्पं विमुञ्चति)

विदूषकः—(चेलाञ्चलेन मार्जयति)

चन्द्रापीडः—अयि भोः, किमर्थमुपकारि अश्रु प्रमार्जयसि ?

पश्य,

कादम्बरीमुखसरोजविलोकनैक-
वाञ्छानिरन्तरतया परनिर्व्यपेक्षाम् ।
भावस्थितिं ध्रुवमुपेत्य ममाश्रुपूरो
रूपान्तरस्फुरणमीक्षणयोर्निरुन्धे ॥ २३ ॥

**विदूषकः**—(केयूरकं प्रति) भो, कहेहि दाव ।

(छाया—भोः कथय तावत् ।)

**केयूरकः**—

कुसुमशयने विक्षिप्याङ्गं गुरुस्मरसंज्वरा
भवदुपगमोपक्षेपेण क्षणं सुसहव्यथा ।
वदत कियती याता वेलेति नः परिपृच्छती
गमयति निशामक्ष्णोरत्यन्तलुप्तनिमीलना ॥ २४ ॥

सुप्तोत्थिता च सा कदाचिद्विभातवेलासु,

चन्द्रापीड प्रकटय दयां देहि मे दृष्टिसौख्यं
जानीषे त्वं मनसि निवसन् बद्धभावां त्वयीमाम् ।
इत्थं स्वप्ने निगदितमनुव्याहृतं शारिकाभि-
र्व्रीडालोला प्रथयति जनायान्वितं शूलपाणौ ॥ २५ ॥

**पत्रलेखा**— हद्धि, एदं मम्मिवि ट्ठिआए एव्वं संवुत्तं ।

(छाया—हा धिक्, इदं मय्यपि स्थितायामेवं संवृत्तम् ।)

**केयूरकः**—

सा निर्याति विनापि मागधवधूगीतानि शय्यागृहात्
सैरन्ध्रीमपि न प्रभातसमयाकल्पाय संमन्यते ।
याताः कन्दुककेलयः परिहृतो लीलावनेष्वादर-
स्त्यक्तं लास्यमपाकृतो मधुरसस्तस्यास्त्वदुत्कण्ठया ॥

चन्द्रापीडः—(कामाभिषङ्गमभिनयन्)

पुरैव कृशतां गतं क्षपय घोरसारैः शरैः
शरीरमसुभिर्धृतं मम तु वज्रकीलायितैः ।
प्रसीद रतिवल्लभ त्वमिदमेवमभ्यर्थ्यसे
प्रियां मनसि वर्तिनीं परिहरैष बद्धोऽञ्जलिः ॥ २७ ॥

केयूरकः—देव, कथमावेद्यन्ते देव्यास्तादृशान्युत्कण्ठाप्रलपितानि ।

नन्वेष याति नयनोत्सवतां प्रियो मे
मिथ्यैव निर्दयमिमं प्रवदामि सख्यः ।
इत्थं मुहुर्विगतलक्षमुदीरयन्त्या-
स्तस्याः प्रमोह इव न प्रमदाय बोधः ॥ २८ ॥

चन्द्रापीडः—अथ किं नु संदिश्यानुपातितो भवान् देव्या?

केयूरकः—न किंचित्संदिष्टं देव्या । अहं तु देव्यामेवमवस्थायां महादेव्या मदिरयानुप्रेषितो महाश्वेताश्रमम् । तया च देवपादान्तिकं प्रेषितोऽस्मि ।

चन्द्रापीडः—तत्कथय वाचिकं महाश्वेतायाः ।

केयूरकः—

"स्त्रीसृष्टिनैपुणमिदं विफलं विधातुः
सौजन्यवानिति यशो वितथं स्वकीयम् ।

अभ्यर्थनां मम च संप्रति मोघयत्नां
कर्तुं सखे न हि तवोचितमित्यवैमि ॥" २९. ॥

इतीदं वचनमार्यायाः।

**चन्द्रापीडः**—संदिष्टं तया संदेष्टव्यम्। किं करोमि? नानिवेद्य गुरुजनस्य युज्यते गन्तुम्। वैशम्पायनोऽपि मे द्वितीयं हृदयं न संनिहितः।

(नेपथ्ये)

भो भो जङ्घाकारिकाः, कियत्यन्तरे परापतितः स्कन्धावारः?

**विदूषकः**—(श्रुत्वा) दिट्ठिआ उवट्ठिओ अमच्चवेसम्पायणो।

**(छाया—दिष्ट्या उपस्थितः अमात्यवैशम्पायनः।)**

**चन्द्रापीडः**—तिष्ठ, श्रुणुमः।

(पुनर्नेपथ्ये)

दशपुरं यावत्।

**चन्द्रापीडः**—(सहर्षम्) सखि पत्रलेखे, सखे केयूरक,

चक्षूरागात्प्रभृति विदितो भावबन्धः स तादृ-
ग्देव्याश्चित्तस्थितिविसदृशी सापि याता प्रतिज्ञा।
आवेद्यैतद् गुरुजनमुखादेव लब्ध्वा निदेशं
प्रस्थास्नोर्मे न खलु भविता प्रान्तरे हेमकूटः॥ ३०॥

युवाभ्यां तु पुरतो देव्याः प्राणसंधारणाय गन्तव्यम्।

**केयूरकः**—सांप्रतं हि सफलप्रयासोऽस्मि।

**विदूषकः**—दिट्ठिआ मए वि बह्मणेण विवाहभोअणं अइराल्ल-हिज्जइ ।

(**छाया**—दिष्ट्या मयापि ब्राह्मणेन विवाहभोजनमचिराल्लप्स्यते ।)

**चन्द्रापीडः**— (नेपथ्यं प्रति) अस्ति किमिहार्यकैलासः?

(प्रविश्य)

**कञ्चुकी**—अयमस्मि ।

**चन्द्रापीडः**—मेघनादमितः प्रापय ।

**कञ्चुकी**—यदादिशति देवः । (इति निष्क्रम्य मेघनादेन प्रविशति)

**मेघनादः**—(स्वगतम्) रीतिरियं सामान्यतः सेवकानाम्;

चित्तमार्द्रमनुजीविषु प्रभोः
स्वामिभक्तिरपि निश्चला मम ।
संमुखीभवितुमस्य सांप्रतं
भूयते तदपि बिभ्यता मया ॥ ३१ ॥

(उपसृत्य, प्रकाशम्)—

जयतु स्वामी ।

**चन्द्रापीडः**—मेघनाद, यत इमामादाय भवानागतस्तामेव भुवमियं भूयोऽपि भवता प्रापणीया ।

**मेघनादः**—प्रतिगृहीतः प्रसादः ।

**चन्द्रापीडः**—(पत्रलेखाकेयूरकौ प्रति) गच्छतम्। एवं च विज्ञापयतं देवीम्—

जाने मन्मथवैशसं त्वयि यथैवायं जनस्ताम्यति
प्राणानां करणीयमेव तदपि स्थैर्याय धैर्यं त्वया।
त्वत्पादान्तिकमस्मि सेवितुमसावायात एव प्रिये
सेयं नौ भवितव्यता भगवती जायेत चेन्नार्गला ॥ ३२ ॥

(पत्रलेखाकेयूरकौ चन्द्रापीडस्य पादयोः निपत्य मेघनादेन सह निष्क्रान्तौ)

**चन्द्रापीडः**—यावदहं तताज्ञया वैशम्पायनं प्रत्युज्जिगमिषामि। (विदूषकं प्रति) सखे, त्वरयतु भवान् राजकं यात्रायै।

**विदूषकः**—एसो सेणावइत्तणं करेमि।

(**छाया**—एष सेनापतित्वं करोमि।)

(इति निष्क्रान्तः)

**चन्द्रापीडः**—कैलास, आदिश मार्गं तातान्तिकोपगमनाय।

**कञ्चुकी**—इत इतो युवराजः।

**चन्द्रापीडः**—उद्यानान्निर्गत्य परिक्रामन्,

वात्सल्यनिघ्नमनसा बहुमानपूर्वं
तातेन चाटुवचनैरुपलाल्यमानः।

शुश्रूषणे स्वयममुष्य कृतादरोऽपि
विस्मर्तुमेष न पुनः प्रभवामि देवीम् ॥ ३३ ॥

**कञ्चुकी**—एष हि महाराजो देव्या विलासवत्यार्यशुकनासेन च साकमिच्छाविहारं नाम मण्डपमधितिष्ठति । उपसर्पतु भवान् ।

**चन्द्रापीडः**—आर्य, तिष्ठ स्वनियोगे ।

**कञ्चुकी**—तथा । (इति निष्क्रान्तः)

**चन्द्रापीडः**—(परिक्रामति)

(ततः प्रविशति यथानिर्दिष्टस्तारापीडो विभवतश्च परिवारः ।)

**तारापीडः**—(दृष्ट्वा) एष खलु वत्सो वैशम्पायनस्यागमनवार्तयास्मानभिनन्दयितुमापतति ।

**चन्द्रापीडः**—(सविनयमुपसृत्य यथाक्रमं प्रणमति)

**तारापीडः**—वत्स वत्स, इत इतः ।

(इत्युत्सङ्गमुपदर्शयति)

**चन्द्रापीडः**—(सप्रणयमुपसृत्य परिजनोपनीतमासनमपसारयन् भूमावुपविशति)

**शुकनासः**—

विद्यास्वस्य विशृङ्खला चतसृषु प्रज्ञेव दोर्विक्रमो
दिक्ष्वष्टासु परीक्षितो गुरुजनेष्वेवंविधः प्रश्रयः ।

आशास्येष्ववशिष्यते किमपरं कार्यं परं संग्रहो
दाराणामनुरूपवंशजनुषां गार्हस्थ्यधर्मोचितः ॥ ३४ ॥

विलासवती—मम वि एक्को एव्व इमो मणोरहो अणिव्वूढो ।

(छाया—ममाप्येक एवायं मनोरथोऽनिर्व्यूढः ।)

चन्द्रापीडः—( किंचिन्मुखमवनमय्य, आत्मगतम् ) अहो ! मनोरथसंवादो गुरुजनस्य । संप्रति सुहृद्दर्शनान्तरितं मनोरथं पश्यामि । तत्किमद्यापि विलम्ब्यते प्रत्यासेदुषोऽस्य वार्तासु ?

(प्रविश्य)

वलाहकः—(स्वगतम् ) कथमिवैषामनभ्रनिर्घातदारुणं वैशम्पायनोदन्तं निवेदयामि ?

(उपसृत्य यथोचितं प्रणमति)

तारापीडः—सेनापते, कदास्मानानन्दयिष्यति वत्सो वैशम्पायनः ?

वलाहकः—(निश्वस्य) प्रस्थानदिवस एव युवराजस्य कस्मिंश्चित्प्रेक्षणीये रसानुबन्धनादीषच्छिथिलसत्त्व इवोत्प्रेक्ष्यमाणो यदा सहास्माभिरन्येद्युरसौ चैत्ररथवास्तव्यमिन्दुमौलिं निनंसुरच्छोदमभिप्रस्थितः, तदा

कस्मिंश्चित्तदुपान्तवर्तिनि मिलद्भृङ्गालिशृङ्गारिते
रक्ताशोकलतागृहे प्रणयिनीवासज्यमानेक्षणः ।

चित्रन्यस्त इव स्थितश्चिरमसावन्तर्मुखैरिन्द्रियै-
रुद्बाष्पः किमपि स्मरन्निव दिनं तत्रैव तन्नीतवान् ॥ ३५ ॥

**शुकनासः**—(स्वगतम्)

किमपि विहृतियोग्यास्तादृशास्ते प्रदेशाः
सुलभबहुविकारो यौवनस्य स्वभावः ।
सुचिरमथ गुरूणां संनिधेरप्यभावः
श्लथयति दृढबुद्धेरप्यहो धैर्यबन्धम् ॥ ३६ ॥

**विलासवती**—तदो किं पडिवण्णं तुज्झेहिं ?

(**छाया**—ततः किं प्रतिपन्नं युष्माभिः ?)

**वलाहकः**—तदानीमुज्जयिनीप्रयाणाय मुहुर्निष्फलाभ्यर्थनप्रयत्नैः स्थापितपर्याप्तपरिकरैः प्रस्थितं ततोऽस्माभिः । अतः परं महाराजः प्रमाणम् ।

**चन्द्रापीडः**—(स्वगतम्) स्वप्नेऽपि हि नास्य भाव्यतेऽन्योन्यमावयोः सख्ये प्रामादिकं स्खलितम् । कुत इयमकाण्डवैराग्यबुद्धिरस्यानवाप्तचतुर्भद्रस्य ?

इष्टापूर्तैर्न निर्व्यूढो धर्मः कामस्य का कथा ।
किं नोपयुक्तेनार्थेन तत्किं स्यादमुना कृतम् ॥ ३७ ॥

अथवा, ममोपकृतमेव सख्या भूयः कादम्बरीदर्शनोपायमुपक्षिपता ।

**तारापीडः**—किं बहुना? वत्सस्य चन्द्रापीडस्यैवैष दोष इत्यवैमि।

एकाकिनं बालकमेनमेवं
नास्थापयिष्यद्यदि तत्र दूरे।
अस्माकमेवं हृदयस्य पीडा
सुदुःसहा संप्रति नाभविष्यत्॥ ३८॥

**शुकनासः**—महाराज, नैवमनुचितानि व्यवहरणीयानि। तेन तु हतात्मना शुकेनेव बहु शिक्षितेन सुपोषितेनापि परिचयो नोपदर्शितः। तदयं तस्यामेव तिर्यग्जातौ निपत्य क्वचिच्छून्यारण्ये दुःखशतभाजनं भूयात्।

(इति बाष्पं विमुञ्चति)

**तारापीडः**—आर्य, मैवं तावत्। अमर्षितस्य हि गुरुजनस्य पारुष्यं गर्भरूपेषु शापतया परिणमत्येव।

**चन्द्रापीडः**—(स्वगतम्) अहो! धिक् स्फुटतीव मे हृदयममुनापवादशङ्कुसंघटनेन। (उत्थाय, प्रकाशम्) अनुजानातु मां तातः सुहृदमानेतुम्।

**शुकनासः**—को वा सचेतनोऽनुजानीते हृदावमग्नस्य त्रापुषभूषणस्योद्धरणाय जाम्बूनदस्य जले विक्षेपम्?

**तारापीडः**—आर्य, नात्र भवद्भिरोऽभिमन्यामहे। (विलासवतीं प्रति) यथा वा देवी मन्यते।

**विलासवती**--कहं वि सक्कं मए कइवअदिअहाइं वच्छस्स अदंसणदुक्खं अणुहोदुं; ण उण से सहिविरहदूअमाणं मुहं पेक्खिदुं।

(छाया—कथमपि शक्यं मया कतिपयदिवसानि वत्सस्यादर्शनदुःखमनुभवितुम्। न पुनरस्य सखिविरहदूयमानं मुखं प्रेक्षितुम्।)

**तारापीडः**—शोकातुरयापि शोभनमुदीरितं देव्या।

**चन्द्रापीडः**—(गमनोत्साहमभिनयन्नपसारितोष्णीषः प्रणमति)

**तारापीडः**—(परिष्वज्य साश्रुगद्गदम्)

कृतसमुचितदारसंग्रहे त्व-
यथवनिभरं विनिवेश्य निर्वृतः स्याम्।
इति समुदयिनां मनोरथाना-
मजनि महानयमेवमन्तरायः॥ ३९॥

**बलाहकः**—देव, न प्रयाणवेलायामश्रु मोक्तव्यम्।

**विलासवती**—अवि णाम अवन्तिउलदेवदाणं पसादेण वच्चाणं वअणकमलं पुणो वि पेक्खिस्सम्?

(छाया—अपि नामावन्तिकुलदेवतानां प्रसादेन वत्सयोर्वदनकमलं पुनरपि प्रेक्षिष्ये?)

**बलाहकः**—(निश्वस्यात्मगतम्।) न जाने चन्द्रापीडस्य। वैशम्पायनस्य तु निश्चितमेवापुनर्दर्शनम्।

**चन्द्रापीडः**—(साञ्जलिबन्धं गुरुजनं प्रति) एषोऽस्मि युष्माभिरभ्यनुज्ञातः।

(इति परिक्रामति)

**शुकनासः**—किं करोमि? अस्थाने वत्सस्य महानाग्रहः। भवतु; सेनापते, गच्छ। त्वमेव चिरयात्रापरिक्लिष्टमपि देशज्ञमेव युवराजस्याश्ववारपरिकरं प्रस्थापय।

**वलाहकः**—यदादिष्टममात्येन।

(इति परिक्रामति)

**चन्द्रापीडः**—(राजकुलान्निर्गत्य) नन्वेष सज्ज एवेन्द्रायुधः। किमेष विरतहर्षहेषारवो दीन इव विभाव्यते। यद्वा, सुलभैव हि देहिनां मनःपीडा। (स्वगतम्) मम तु संप्रति,

निशम्य वार्तां सुहृदो विषण्णं
  द्रक्ष्यामि देवीमिति जातहर्षम्।
मध्ये स्थितस्योष्णतुषारभासो-
  श्चेतश्चकोरस्य दशामुपैति॥ ४०॥

**वलाहकः**—(उपगम्य) युवराज, अवधार्यताममात्यप्रेषितं सैन्यम्।

चन्द्रापीडः—भवतु, निवर्ततां भवान् । आश्वासय तातमार्यशुकनासमम्बां मनोरमां च ।

(नाट्येनेन्द्रायुधमारुह्य)

एषोऽस्मि बहुभिर्यत्नैर्निवृत्तः सुहृदा सह ।
नियतिः प्रातिकूल्येन यदि मां नाभियुज्यते ॥ ४१ ॥

(इति निष्क्रान्ताः सर्वे)

षष्ठोऽङ्कः ।



# सप्तमोऽङ्कः ।

(प्रविश्य)

**तरलिका**—आदिट्ठम्मि भट्टिदारिआए काअम्बरीणिमित्तं बहुदिअहकारिदाए भअवदो चउम्मुहस्स वरिवस्साए वणदेवदासआसादो ओवहारिअं गहीदुं अरुहसित्ति । जाव तं उवसप्पेमि ।

(छाया—आदिष्टास्मि भर्तृदारिकया कादम्बरीनिमित्तं बहुदिवसकारितायै भगवतश्चतुर्मुखस्य वरिवस्यायै वनदेवतासकाशात् औपहारिकं ग्रहीतुमर्हसीति । यावत्तामुपसर्पामि ।)

(इति परिक्रामति)

**(ततः प्रविशति चैत्ररथवनदेवता)**

**वनदेवता**—(समन्तादवलोक्य) अहो ! अस्मन्निदेशानुवृत्तिचतुरता वारिदसमयश्रियः । तथाहि—

स्फुटत्कुटजमुन्मिषन्निचुलमुच्छ्वसन्मालति
स्फुरत्प्रियकमुल्लसत्ककुभमुन्नमत्कैतकम् ।
नदच्छिखि मदभ्रमन्मधुकरं चलच्चातकं
वहत्तटिनि निष्पतत्त्रिदशगोपमेतद्वनम् ॥ १ ॥

(दृष्ट्वा) अये ! इयं नः प्रियसखी तरलिका चिराद् दृष्टा ।

**तरलिका**—(उपसृत्य प्रणमति)

**वनदेवता**—भद्रे, चिरं जीव। अपि त्याजितकादम्बरीप्रतिज्ञा हेमकूटान्निवृत्ता सखी महाश्वेता?

**तरलिका**—अह इं।

(छाया—अथ किम्।)

**वनदेवता**—कथयतु तत्त्वतो मे भवती। श्रुतेयं मया प्रवृत्तिश्चन्द्रप्रभाभ्यर्णविहारिणः किंनरमिथुनस्य मुखात्, यथा—अतर्कितप्रस्थितस्य चन्द्रापीडस्य प्रत्यानिनीषया प्रेषितः प्रतिनिवृत्तः किल पत्रलेखया सह केयूरकः कथयन् 'आयास्यति गुरुजनानुमत्या' इति।

**तरलिका**—अत्थि एदं।

(छाया—अस्त्येतत्।)

**वनदेवता**—तर्हि प्रियं मे प्रियम्।

**तरलिका**—उवणेहि दाव पुप्फफलपल्लवाइं।

छाया—उपनय तावत् पुष्पफलपल्लवानि।

**वनदेवता**—(नाट्येनादाय ददाति)

**तरलिका**—सहि, साहेमि अहं।

(छाया—सखि, साधयाम्यहम्।)

(इति निवर्तते)

**वनदेवता**—विलोक्य सदृष्टिक्षेपम्) अये! कोऽयम्?

अङ्गैः कैतकगर्भधूलिधवलैश्छायावशेषैरितो
बिभ्राणः शबलान् वनान्तकुसुमैः पर्याकुलान्मूर्धजान् ।
उद्बाष्पेण दृशोर्युगेन परितो निर्लक्षमालोकयन्
प्रायेण स्वजनस्य कस्यचिदसावन्वेषणव्यापृतः ॥ २ ॥

कथम्! प्रविष्ट एवाश्रमं महाश्वेतायाः ।

(नेपथ्ये)—

अये वरवर्णिनि,

इत्थं नतभ्रु भवती यदि भोगवाञ्छा-
मुन्मुच्य हन्त यतते चरितुं तपस्याम् ।
लोकत्रयप्रथितनिष्फलवीरवादः
कोदण्डदण्डमवरोपयतां मनोभूः ॥ ३ ॥

तरलिका—(कर्णं दत्वा परिवृत्य) णोमालिए, को उण एव्वं अच्चन्तं विवरीदं भणइ?

**(छाया—नवमालिके, कः पुनरेवमत्यन्तं विपरीतं भणति?)**

(पुनर्नेपथ्ये)—

वारं वारं मदनविशिखैर्विध्यमाने भवत्या
कर्तव्या चेत् सुतनु निरनुक्रोशया मय्युपेक्षा ।
कोऽयं धर्मस्तदिह भविता प्रत्युतांहस्तव स्या-
दार्तत्राणं खलु कृतधियः पुण्यमाद्यं वदन्ति ॥ ४ ॥

तरलिका—हद्धि, ईरिसाणं कअत्थणाणं असहणा खु पुण्डरीआणुरत्ता महासेदा। अवस्सं अत्ताणं इमं वा णासेइ। जाव तुरिअपअं गच्छेमि।

(छाया—हा धिक्, ईदृशीनां कदर्थनानामसहना खलु पुण्डरीकानुरक्ता महाश्वेता। अवश्यमात्मानमिमं वा नाशयेत्। यावत् त्वरितपदं गच्छामि।)

वनदेवता—सखि तरलिके, नास्मिन्नत्याहितं विधातव्यम्। ज्ञायते स्वरेणैष चन्द्रापीडस्य मित्रं वैशम्पायन इति।

तरलिका—कहिअं खन्धावारम्मि एक्को एव्व इमो चिट्ठइत्ति। होदु; सहिं दाव अमरिसादो णिवारेमि, तं वि एत्तो अजुत्तकज्जादो।

(छाया—कथितं स्कन्धावारे एक एवायं तिष्ठतीति। भवतु, सखीं तावदमर्षान्निवारयामि, तमप्यस्मादयुक्तकार्यात्।)

(इति निष्क्रान्ता)

(पुनर्नेपथ्ये)—

भअवं परमेसर, जइ अहं देवस्स पुण्डरीअस्स दंसणं आरहिअ पडिवण्णपइव्वदाभावा, तदा एसो अत्थाणकामुओ सुओ विअ दंसिअमुहराओ एदिणा सोच्चन्दवअणत्तणेण तस्सिं एव्व जादीए णिवडिओ होदु।

(छाया—भगवन् परमेश्वर, यद्यहं देवस्य पुण्डरीकस्य दर्शनमारभ्य प्रतिपन्नपतिव्रताभावा, तदा एषोऽस्थानकामुकः शुक इव दर्शितमुखराग एतेन स्वच्छन्दवचनत्वेन तस्यामेव जातौ निपतितो भवतु।)

**वनदेवता**—अहो! महदिदमकल्यमापतितम् । न खल्वन्यथा भवेत्सत्याधिष्ठानं पतिदेवतानाम् । (सचिन्तम्) महापुरुषव्यञ्जनेनाप्यमुना कथमिदमन्याय्यमाचरितम्? बलवता भाव्यं निमित्तेन । यावत्प्रणिधानेनावगच्छामि । (तथा कृत्वा) अहो! दृढानुरागता देहान्तरगतस्यापि दिव्यर्षिनन्दनस्य । स्थाने चास्मिन् समग्रसौभाग्येऽपि प्रतिकूलपारूष्यं पूर्वानुभूतरूपैकपक्षपातिन्या हंसनन्दन्याः । भवतु; स्वयमेव स्फुटीभविष्यन्नेष वृत्तान्तो न प्रकाशनीयः । तदपि तावत् क्षुभितमस्या मनः समाधेयम् ।

(इति निष्क्रान्ता)

**मिश्रविष्कम्भः ।**

---

(ततः प्रविशति इन्द्रायुधाधिरूढश्चन्द्रापीडो विदूषकश्च)

**चन्द्रापीडः**—(समन्तादवलोक्य) कष्टा खलु पान्थता; विशेषेण वर्षासु;

धारानुपातरयनम्रमुखैस्तुरङ्गै-
राजानुपङ्कमिलदङ्घ्रिभिरुह्यमानाः ।
वर्षार्द्रदुर्वहतनुच्छदलग्नखेदाः
कृच्छ्रेण मामनुपतन्ति हयाधिरूढाः ॥ ५ ॥

**विदूषकः**—हद्धि, एव्वं णाणुहूदो कदा वि संसइअजीवदव्वो एआरिसो दुद्दसापरिणामो ।

(छाया—हा धिक्, एवं नानुभूतः कदापि संशयितजीविव्य एतादृशो दुर्दशापरिणामः ।)

चन्द्रापीडः—महतीयं युगपदापतिता अपत्परंपरा। तथाहि—

तामप्राप्य मृगेक्षणां क्षणमपि स्थातुं क्षमो नास्म्यहं
मित्रेण प्रतिपन्नमेतदपदे वैषम्यमीदृग्विधम्।
कालः कर्णकठोरमेघनिनदः कामोऽप्ययं निर्दयो
दुःखार्तेषु निसर्ग एव नियतेरेकान्तवक्रा गतिः ॥ ६ ॥

विदूषकः—अह्माणं वि दुस्सहअरो एसो पाउस्समओ; किं उण दे उक्कण्ठिअस्स?

(छाया—अस्माकमपि दुःसहतर एष प्रावृट्समयः; किं पुनस्ते उत्कण्ठितस्य?)

चन्द्रापीडः—सत्यमाह भवान्।

भ्रूभङ्गीं सुरकार्मुकेन शिखिनां बर्हैः कचानां रुचिं
शारीरामुररीकरोति सुदृशः सौदामिनीभिर्द्युतिम्।
बिम्बोष्ठच्छविमिन्द्रगोपपटलैश्चक्षुःश्रियं कन्दलै-
र्नालं निर्वृतये तथापि मनसो वर्षर्तुलक्ष्मीरियम् ॥ ७ ॥

विदूषकः—मा दाव दाणिं अहिमअसमाअमे खिज्जसु।

(छाया—मा तावदिदानीमभिमतसमागमे खिद्य।)

चन्द्रापीडः—वयस्य, आस्तां तावदनन्तरावश्यंभावी देवीसंदर्शनोत्सवः।

हंसात्मजायाः शुकनाससूनोः
सख्योर्द्वयोरप्यनयोः क्षणेन।

संदर्शनं मे भवतादथापि
धूमायते चित्तमिदं किमेतत् ॥ ८ ॥

सखे, कथय; कियत्यन्तरे वर्तामहे वयं चैत्ररथवनस्य ?

विदूषकः—किं दाणिं वि पुच्छीअदि ? णं उवगअह्म तं एव्व।

(छाया—किमिदानीमपि पृच्छयते ? ननूपगताः स्म तदेव ।)

चन्द्रापीडः—(निरूप्य) सत्यमिमानि खलु तानि हेमकूट-धाम्नां किरातानामावासभूतानि काननानि, यानि किंनरमिथुनानुसार-साक्षिभूतानि । अत्र च,

उन्मीलन्नवमालतीपरिमलैरुन्मोहयन्तो मनः
प्रत्यग्रस्मयमाननीपकलिकामाध्वीकणैर्मांसलाः ।
वाताः केतकधूलिभिर्धवलतामापादयन्तो दिशो
धाराशीकरिणः स्मरानलममी संधुक्षयन्तीव मे ॥ ९ ॥

(किंचिदन्तरं गत्वा) अपि सर इदं तदच्छोदम् ?

उड्डीनहंसयूथं निमग्नकल्हारकुवलयाम्भोजम् ।
उत्कूलकलुषसलिलं विभाव्यते यदिदमन्यदिव ॥ १० ॥

यावदहमेवास्य परिसरलतागृहेषु सुहृदमन्वेषयामि । त्वं तावदश्ववारैः परिवेष्टयैतदखिलं वनम्; यदयमुपस्थितेष्वस्मासु वैलक्ष्यान्नूनमन्यतोऽपसरेत् ।

विदूषकः—असक्कं एदं जगन्ते मयि ।

(छाया—अशक्यमेतत् जाग्रति मयि ।)

(इति सपरिवारो निष्क्रान्तः)

**चन्द्रापीडः**—(परिक्रामन्)

चिरात्प्रणयिनं जनं कुशलिनं पुनर्वीक्षितुं
निवेदयितुमात्मनो हृदयखेदमस्मै स्वयम् ।
अनेन च मनीषिते सुघटिते विहर्तुं सुखं
कदाचिदपि कस्यचित्कथमपि प्रसीदेद्विधिः ॥ ११ ॥

(समन्ततोऽवलोक्य) कथमिह न किंचिदुपलक्ष्यतेऽवस्थानलक्ष्म प्रियसखस्य ? किं नु खलु पत्रलेखामुखान्मदागमनमुपश्रुत्य क्वचिदपक्रान्तः ? (विमृश्य) ननु मां हेमकूटमनुप्रेष्य प्रतिनिवृत्तेन मेघनादेन मे कथितम्—वैशम्पायनस्य पश्चाद्विलम्ब एव न विदित इति । (सचिन्तम्) क्व नु खलु गतं भवेदमुना ? (सनिश्वासम्) सर्वथा स्वस्ति सुहृदे वैशम्पायनाय ।

(आकाशे)—

काद्यापि भद्रं वैशम्पायनस्य ?

**चन्द्रापीडः**—(कर्णौ पिधाय) हन्त ! कथमशरीरिणीयं निशम्यते क्रुशती ? तन्न सुलभं मन्ये पुनर्दर्शनं सख्युः । (सविषादम्) क्व तन्म एतादृशं सुहृद्रत्नम् ? सर्वथा कष्टमापतितम् ।

वयस्यो नैवास्यां भुवि नयनयोरेति विषयं
परस्तादेतस्य क्व नु खलु भविता मार्गणमपि ।

दिदृक्षा प्रेयस्यास्त्वरयति च मामाकुलमते-
रिति द्वैधीभावान्मम तदुभयं दुर्लभमिदम् ॥ १२ ॥

कदाचिद्वैशम्पायनवार्तायाः संनिकर्षान्महाश्वेताप्यभिज्ञैव । (इत्याश्रमसमीपमिन्द्रायुधमुपसर्पयन्) इदानीं तु,

मयानुयुज्यमानेयं किमिवोदीरयिष्यति ।
इति शङ्काकुलः प्रष्टुमिच्छामि च बिभेमि च ॥ १३ ॥

अये! कुतस्त्योऽयमुदारवरवर्णिनीप्रायो महान् जनसमाजः? (सविमर्शम्) नन्वस्मदागमनोद्दिष्टोऽयं दिवसः । तदनया सपरिजनया देव्या कादम्बर्यैव भाव्यमिति तर्कयामि । (साशंकम्)

अविदितमपक्रान्तो यस्त्वं पुरा शठ सांप्रतं
किमिव भवता कार्यं तेनेति मौनमपि व्रजेत् ।
वरतनुरियं निर्दिष्टेऽस्मिन्दिने समुपागतं
जनमिममुत प्रीता संभावयेत्परिरम्भणैः ॥ १४ ॥

(इति सोत्साहमिन्द्रायुधं प्रवर्तयति)

(ततः प्रविशति केयूरकेणोपदिश्यमानमार्गा सह सखीभ्यां पत्रलेखांसावलम्बिनी कादम्बरी)

**कादम्बरी**—(पत्रलेखां विलोक्य) अपि सच्चं एव्व राअउत्तो अज्ज इमं पएसं अलंकरेइ ?

**(छाया—अपि सत्यमेव राजपुत्रोऽद्येमं प्रदेशमलंकरोति ?)**

**पत्रलेखा**—सवामि देवीए पअपङ्कजजुएण दाणिं एव्व देइ दे जुवराओ दंसणसुहं ।

(छाया—शपामि देव्याः पदपङ्कजयुगेन इदानीमेव ददाति ते युवराजो दर्शनसुखम् ।)

**सख्यौ**—सहि, मा उत्तम्म । पूरअन्ति दे खणादो मणोरहं गन्धव्वउलदेवदाओ ।

(छाया—सखि, मा उत्ताम्य । पूरयन्ति ते क्षणान्मनोरथं गन्धर्व-कुलदेवताः ।)

**केयूरकः**—इत इतो देवी ।

(सर्वाः परिक्रामन्ति)

**चन्द्रापीडः**—(साशंसम्) अपि नाम सुहृदो वैशम्पायनस्यानुज्ञया,

उदीर्णैरामूलात्सपदि पुलकाङ्कुरपटलै-
र्वृते घर्माम्भोभिर्व्यतिकरितताम्राङ्गुलिदले ।
गृहीत्वा धन्यः स्यामहमपि कदाचिद्धृरतनुं
करे मङ्गल्योर्णावलयिनि समुत्कम्पतरले ॥ १५ ॥

भवतु, महाश्वेतासमक्षं प्रतीक्षे ।

(इति निष्क्रान्तः)

**केयूरकः**—(अग्रतो विभाव्य) सख्यौ, य एष दूरतया दुर्विभाव्याकृतिरश्ववारः सोऽयमभिज्ञायते देवश्चन्द्रापीड इति ।

पत्रलेखा—(निरूप्य) सच्चं इन्दाउहाहिरुढो जुवराओ एव्व एसो ।

(छाया—सत्यमिन्द्रायुधाधिरूढो युवराज एवैषः ।)

कादम्बरी—(सहर्षं स्वगतम्) अह्मो! मज्जिदा विअ दाणिं आणन्दमए महद्धदम्मि ।

(छाया—अहो ! मज्जितेवेदानीमानन्दमये महाह्रदे ।)

तमालिका—कीस देवदादुदीओ विअ दीसइ ?

(छाया—कथं देवताद्वितीय इव दृश्यते ?)

मदलेखा—णूणं अस्समोवरोहो ण होदुत्ति विसज्जिअपरिवारो अय्यं महासेदं उवसप्पइ ।

(छाया—नूनमाश्रमोपरोधो न भवत्विति विसर्जितपरिवार आर्यां महाश्वेतामुपसर्पति ।)

कादम्बरी—जुज्जइ । ता कहिं अय्याए महासेदाए अस्समपदं ?

(छाया—युज्यते । तत्कुत्रार्याया महाश्वेताया आश्रमपदम् ?)

केयूरकः—इदमाश्रमपदद्वारम् । प्रविशतु भर्तृदारिका ।

(सर्वे प्रवेशमभिनयन्ति)

केयूरकः—(समन्तादवलोक्य) कथममूरयथापुरश्रियो विभाव्यन्ते चतुर्मुखायतनोपकण्ठभुवः ? तथाहि—

ध्यायन्तीव महीरुहो विरहिताः कोलाहलैः पत्रिणां
विश्रान्तप्रसवाः श्रयन्ति लतिकाः क्लान्तिं निदाघोचिताम् ।
उद्बाष्पाकुलदृष्टयो न हरिणा गृह्णन्ति दूर्वाङ्कुरान्
वन्या चैत्ररथी च शोच्यविभवा शून्येयमन्यादृशी ॥ १६ ॥

**कादम्बरी**—( स्वगतम् ) ण खु भवे चिरोक्कण्ठाभरोव्वहण-किलमेन्तहिअआए किसदा अय्याए ? किंच ण जाणेमि कहंति ; तक्केमि उवट्ठिए वि युवराए मे पडिण्णालङ्घणमेत्तं अवसेसिअं भविस्सदित्ति ।

(छाया—न खलु भवेच्चिरोत्कण्टाभरोद्वहनक्लान्तहृदयायाः कृशता आर्यायाः ? किंच न जाने कथमिति ; तर्कयामि उपस्थितेऽपि युवराजे मे प्रतिज्ञालङ्घनमात्रमवशेषितं भविष्यतीति ।)

**पत्रलेखा**—(दृष्ट्वा) देवि, इदो पेक्ख । एसा खु अय्या कअम्बतरुमूलं तरलिआदुदीआ अहिचिट्ठइ ।

(छाया—देवि, इतः पश्य । एषा खलु आर्या कदम्बतरुमूलं तरलिकाद्वितीया अधितिष्ठति ।)

**कादम्बरी**—(निरूप्य) हद्धि, पज्जाउलवदणा सही मे लक्खीअदि ।

(छाया—हा धिक्, पर्याकुलवदना सखी मे लक्ष्यते ।

**सख्यौ**—समओ खु एसो मम्महफणिविसविजंहिआणं ।

(छाया—समयः खल्वेष मन्मथफणिविषविजृम्भितानाम् ।)

केयूरकः—

ज्योत्स्नाभिर्विमलाभिरायततरैर्यामैर्निशानां स्फुटैः
कुन्दैश्चन्दनवायुना सुरभिणा रम्यैर्दिनान्तैरपि ।
षड्जामोदकलैश्च बर्हिणरवैरेनां बबाधे बहून्
वारान्मन्मथ एष हन्त किमतो बाधिष्यते सांप्रतम् ॥१७॥

(उपसर्पति)

(ततः प्रविशति तरलिकया सह महाश्वेता)

महाश्वेता—तरलिए, णं तुए वि सुदं वणदेवदामुहादो एसो जुवराअस्स वअस्सो वेसम्पाअणोत्ति ।

(छाया—तरलिके, ननु त्वयापि श्रुतं वनदेवतामुखात् एष युवराजस्य वयस्यो वैशम्पायन इति ।)

तरलिका—सुदं एव्व ।

(छाया—श्रुतमेव ।)

महाश्वेता—मन्दभाआए मे सोहग्गं वि विसलदाए विअ एव्वं परिणामदारुणं जादं । दाणिं कुदो मे सहअरोत्ति पुच्छन्तस्स राअउत्तस्स किं उत्तरं अब्भुवगमिस्सं ?

(छाया—मन्दभाग्याया मम सौभाग्यमपि विषलताया इव एवं परिणामदारुणं जातम् । इदानीं कुत्र मे वयस्य इति पृच्छतो राजपुत्रस्य किमुत्तरमभ्युपगमिष्यामि ?)

(इति रोदिति)

तरलिका—किं एत्थ सही करेदु ? सव्वस्स वि जीवलोअस्स णिजकम्मणिअमिदाइं खु सुहासुहाइं ।

(छाया—किमत्र सखी करोतु ? सर्वस्यापि जीवलोकस्य निजकर्मनियमितानि खलु शुभाशुभानि ।)

**कादम्बरी**—(उपसृत्य) सहि महासेदे, कीस एव्वं पज्जाउलासि ?

(छाया—सखि महाश्वेते, कथमेवं पर्याकुलासि ?)

**महाश्वेता**—(दृष्ट्वा) सहि काअम्बरि, ण मं पावसीलं आलविदुं अरुहसि, जाए रक्खसीए जुवराअमित्तं वेसम्पाअणो तारिसिं दसं पाविदो ।

(छाया—सखि कादम्बरि, न मां पापशीलामालपितुमर्हसि, यया राक्षस्या युवराजमित्रं वैशम्पायनस्तादृशीं दशां प्रापितः ।)

**पत्रलेखा**—(सावेगम्) सुदं मए हेमऊड एव्व किंणरमिहुणमुहादो केण वि किल कारणेण णिव्विण्णमाणसो अय्यवेसम्पाअणो गए वि राअलोए पच्चा विलम्बिअ उम्मत्तो विअ महासेदासमं समन्तदो परिब्भमइत्ति । कहेहि, किं उण से संवुत्तं ? जेण एव्वं पज्जाकुला अय्या ।

(छाया—श्रुतं मया हेमकूट एव किंनरमिथुनमुखात् केनापि किल कारणेन निर्विण्णमानस आर्यवैशम्पायनो गतेऽपि राजलोके पश्चाद्विलम्ब्य उन्मत्त इव महाश्वेताश्रमं समन्ततः परिभ्रमतीति । कथय किं पुनरस्य संवृत्तम् ? येन पर्याकुला आर्या ।)

**महाश्वेता**—(सबाष्पमधोमुखी तिष्ठति)

**केयूरकः**—तरलिके, कथय किमकल्यमस्य संवृत्तम् ? अयं हि,

वयस्यो नर्मगोष्ठीषु संग्रामेष्वग्रतःसरः ।
अमात्यो युवराजस्य राजतन्त्रोपपत्तिषु ॥ १८ ॥

**तरलिका**—(यथावृत्तं कथयति)

(सर्वे विषादं नाटयन्ति)

**केयूरकः**—अहो! धिक् । अद्य खलु,

मन्दानिलेन मधुरिव मधुनेव वियुक्तवान्मदनः ।
मदनेनेव तरुणिमा देवः सुहृदानुकूलेन ॥ १९ ॥

**पत्रलेखा**—कहं वा इमं अदिसइदवज्जपडणं उत्तन्तं सुणिअ सामिणो हिअअं न पप्फुडइ?

(छाया—कथं वेममतिशयितवज्रपतनं वृत्तान्तं श्रुत्वा स्वामिनो हृदयं न प्रस्फुटति?)

**कादम्बरी** तारिसाइ एव्व अह्माणं भाअधेआइ, जदो असुहपिसुणं फुरइ मे दक्खिणं णअणं ।

(छाया—तादृशान्येवास्माकं भागधेयानि, यतोऽशुभपिशुनं स्फुरति मे दक्षिणं नयनम् ।)

**सख्यौ**—कहं दाणिं विलम्बिअं जुअराएण? जो अस्समपदं पविसन्तो एव्व अह्मेहिं अवलोइओ ।

(छाया—कथमिदानीं विलम्बितं युवराजेन? य आश्रमपदं प्रविशन्नेवास्माभिरवलोकितः ।)

(प्रविश्य संभ्रान्तः)

**विदूषकः**—अय्ये महासेदे, रक्ख रक्ख इमं राअउत्तं इमादो जीविदसंसआदो ।

(**छाया**—आर्ये महाश्वेते, रक्ष रक्ष इमं राजपुत्रमस्मात् जीवितसंशयात् ।)

**सर्वाः**—किं तस्स ?

(**छाया**—किं तस्य ?)

**विदूषकः**—ण जाणे अहं कालणं । पच्चा वेसम्पाअणं अण्णेसिदुं पउत्तो दिट्ठेहिं तस्स परिअणेहिं साविदउत्तन्तो ज़ाव एत्थ आअच्छेमि, ताव पुरद एव्व अस्समपदं पविट्ठो इन्दाउहोवरि ट्ठिओ एव्व णिप्पन्दसव्वङ्गसंधाणो मए वअस्सो दिट्ठो ।

(**छाया**—न जानेऽहं कारणम् । पश्चात् वैशम्पायनमन्वेष्टुं प्रवृत्तो दृष्टैस्तस्य परिजनैः श्रावितवृत्तान्तो यावदत्रागच्छामि, तावत् पुरत एवाश्रमपदं प्रविष्ट इन्द्रायुधोपरि स्थित एव निःस्पन्दसर्वाङ्गसंधानो मया वयस्यो दृष्टः ।)

**सर्वाः**—हा हदविधे, कहं सव्वंकसोसि ?

(**छाया**—हा हतविधे, कथं सर्वंकषोऽसि ?)

**कादम्बरी**—(मूर्च्छति)

**केयूरकः**—

कथमपि चिरलब्धं हन्त राकाशशाङ्कं
प्रसतु किल कुतोऽपि प्राप्तवान् सैंहिकेयः ।

अथ तदमृतपानव्यापृतेयं चकोरी
कलयतु न विषादादद्य कां कामवस्थाम् ॥ २० ॥

**महाश्वेता**—(आश्वस्य) अह्मो ! मन्दभाअधेआ अहं एव्व केवलं ण दुक्खाइं अणुभवामि, पेक्खामि अ सहिं वि अपुण्णमणोरहं मज्जन्ति सोअसाअरे ।

(**छाया**—अहो ! मन्दभागधेया अहमेव केवलं न दुःखान्यनुभवामि, पश्यामि च सखीमपि अपूर्णमनोरथां मज्जन्तीं शोकसागरे ।)

**पत्रलेखा**—(विदूषकमुद्दिश्य) अय्य, णेहि मं वि तहिं, जहिं मे सामी ।

(**छाया**—आर्य, नय मामपि तत्र, यत्र मे स्वामी ।)

**मदलेखातमालिके**—( चेलाञ्चलेन वीजयन्त्यौ सास्रम् ) भट्टिदारिए, आससिहि आससिहि ; एहि, पेक्ख जीविएसरं ।

(**छाया**—भर्तृदारिके, आश्वसिहि आश्वसिहि । एहि, पश्य जीवितेश्वरम् ।)

**कादम्बरी**—(प्रबुध्य) दंसेह सहीओ । कहिं मे जीविएसरो ?

(**छाया**—दर्शयतं सख्यौ । कुत्र मे जीवितेश्वरः?)

**विदूषकः**—इदो एह ।

(**छाया**—इत एत ।)

(सर्वे उत्थाय परिक्रामन्ति)

**कादम्बरी**—(दृष्ट्वा सावेगम्) हा हदह्मि मन्दभाआ । सहीओ, किं ण पेक्खह । तह एव्व दीसइ महाभाओ जह णिवेइओ अय्येण ।

(छाया—हा हतास्मि मन्दभाग्या। सख्यौ, किं न पश्यथः? तथैव दृश्यते महाभागः यथा निवेदित आर्येण।)

(इति मुह्यति)

(सर्वे मुक्ताक्रन्दं भूमौ पतन्ति)

**महाश्वेता**—अह्मो! णिट्ठुरत्तणं अह्माणं, जा एआरिसं जुवराअं पेक्खन्तिओ वि जीविदं धारेह्म।

(छाया—अहो! निष्ठुरतास्माकम्, यदेतादृशं युवराजं पश्यन्त्योऽपि जीवितं धारयामः।)

**कादम्बरी**—(उत्थाय सधैर्यावष्टम्भम्) अहवा एसो मे पहरिसेव्वो समओ; जहिं मह इमं अणुसरन्तीए अणन्तराओ वइअरो लोअन्तरे होइ।

(छाया—अथवा एष मे प्रहर्षितव्यः समयः, यत्र ममेममनुसरन्त्या अनन्तरायो व्यतिकरो लोकान्तरे भवति।)

**पत्रलेखा**—हा महाराअकुलभूसण, हा भारदवरिसभाअधेअ, हा मालवलोअसुकअपरिणाम, हा उज्जइणीतिलअ, हा विलासवईणअणपुण्णचन्द, कहिं वट्टसि?

(छाया—हा महाराजकुलभूषण, हा भारतवर्षभागधेय, हा मालवलोकसुकृतपरिणाम, हा उज्जयिनीतिलक, हा विलासवतीनयनपूर्णचन्द्र, कुत्र वर्तसे?)

**कादम्बरी**—(साश्रुगद्गदं संस्कृतमाश्रित्य) अयि मदलेखे, एषाहमनुप्रतिष्ठे प्राणेश्वरम्।

मुच्यन्तां शुकशारिकाः सकरुणं क्रीडामृगः पाल्यतां
बालाशोकतरुप्रियङ्गुलतयोः कार्यो विवाहोत्सवः ।
लेख्या चित्रपटे त्वयास्मि लिखितो यस्मिन्मया वल्लभो
दद्यास्त्वं सह नौ विहारसरसीतोयैर्निवापाञ्जलिम्॥२१॥

**केयूरकः**—(निश्वस्य) आर्य, न खलु पश्याम्येवमवस्थायाः कारणं किमपि युवराजस्य ।

वैशम्पायनवृत्तान्तो यद्यनेन न संश्रुतः ।
दशेयं न भवत्येव प्रत्याशा प्राणधारिणी ॥ २२ ॥

**महाश्वेता**—(विमृश्य सानुतापम्) सुमरामि दाणिं । हदासाए मए खु तस्सिं वेसम्पाअणसंखोहे मा उण एआरिसो पसङ्गो होदुत्ति को वि समओ कओ ।

(छाया—स्मरामीदानीम् । हताशया मया तस्मिन् वैशम्पायन-संक्षोभे मा पुनरेतादृशः प्रसङ्गो भवत्विति कोऽपि समयः कृतः ।)

**सर्वे**—को विअ ?

(छाया—क इव ?)

**महाश्वेता**—जो उण एत्थ इत्थिआकामुओ पविसइ, सो तक्खणं एव्व ठावरणिव्विसेसो होइत्ति ।

(छाया—यः पुनरत्र स्त्रीकामुकः प्रविशति, स तत्क्षणमेव स्थावर-निर्विशेषो भवेदिति ।)

**विदूषकः**—हद्धि, हद्धि। उववण्णं एदं इमस्सिं काअम्बरीकामुअम्मि ।

(छाया—हा धिक्, हा धिक् ! उपपन्नमिदमस्मिन् कादम्बरीकामुके ।)

**महाश्वेता**—किं बहुहिं कहाहिं? अहं एव्व सव्वाणत्थणिदाणं संवुत्ता ।

(छाया—किं बहुभिः कथाभिः ? अहमेव सर्वानर्थनिदानं संवृत्ता ।)

**कादम्बरी**—जह कहं वा होदु । परिच्चइदव्वं मए सरीरं । केऊरअ, अवरोहेहि दाव वाहणादो महाभाअं ।

(छाया—यथा कथं वा भवतु। परित्यक्तव्यं मया शरीरम् । केयूरक, अवरोहय तावत् वाहनान्महाभागम् ।)

**केयूरकः**—(तथा कुर्वन् स्पर्शं नाटयित्वा) हन्त! कथं मणिपुत्रिकायितं देवेन चन्द्रापीडेन । देवि, कुत्रोपवेश्यतां देवः ?

**कादम्बरी**—(उपविश्य) इदो देहि । मुहुत्तअं अङ्केण धरिअ तदो अणुगमिस्सं ।

(छाया—इतो देहि । मुहूर्तमङ्केन धृत्वा ततोऽनुगमिष्यामि ।)

(इत्यादायाङ्केन धारयति)

**केयूरकः**—( सदृष्टिक्षेपम् )

उज्जृम्भतेऽस्य वपुषो लिम्पदिवामृतरसेन देहं नः ।
उद्बाष्पयोर्नयनयोः किमपि तु प्रसादनं ज्योतिः ॥ २३ ॥

(सर्वे दृष्टिप्रतिघातं रूपयन्ति)

(आकाशे)—

वत्से महाश्वेते,

प्रथममसि मयानुमरणान्निवारिता पुण्डरीकमपहरता ।
स्थाने धृतास्त्वयापि प्राणा यत्प्रियसमागमो भविता ॥२४॥

इदानीमपि निरूप्यतां कापि नियतिवैचित्री ।

सत्याधिष्ठानतस्ते शशिमणिमयतां यातमेतच्छरीरं
चन्द्रापीडस्य तादृक्प्रकृतिबलधृतान्नान्यथा चिन्तनीयम् ।
कादम्बर्या विशेषात्करसरसिरुहस्पर्शतो नन्द्यमानं
यावच्चैतन्यलाभं निवसतु युवयोरत्र संप्रत्ययाय ॥ २५ ॥

**केयूरकः**—आश्चर्यम्,

किमिदमिति गिरं निगद्य सद्यो
लयमुपयात्यतिनेत्रशक्ति तेजः ।
तटिदुदितमिवैतदादधानं
तरलतया हृदये चमत्क्रियां नः ॥ २६ ॥

**पत्रलेखा**—(सोद्वेगातिशयम्) भो इन्दाउह, एहि दाव। तुमं वि ण सोहसि सामिणा विरहिओ। सहिओ, एसह्मि सामिसेवाए विसज्जिदा तुह्मेहिं।

(**छाया**—भो इन्द्रायुध, एहि तावत्। त्वमपि न शोभसे स्वामिना विरहितः। सख्यः, एषास्मि स्वामिसेवायै विसर्जिता युष्माभिः।)

(इतीन्द्रायुधेन सह निष्क्रान्ता)

**विदूषकः**—हद्धि, हद्धि। किं एसा काउं ववसिदेत्ति ण जाणामि।

(छाया—हा धिक्, हा धिक्। किमेषा कर्तुं व्यवसितेति न जानामि।)

**मदलेखादयः**—कहं अच्छोदाहिमुहं पत्थिदा सही।

(छाया—कथमच्छोदाभिमुखं प्रस्थिता सखी।)

**महाश्वेता**—अह्मो! णिमग्गा एव्व दुवे वि सलिलरासिम्मि।

(छाया—अहो! निमग्नावेव द्वावपि सलिलराशौ।)

**कादम्बरी**—एसा एव्व धण्णा जाए अविलम्बिअं एव्व पडिकओ दुक्खभरो।

(छाया—एषैव धन्या यया अविलम्बितमेव प्रतिकृतो दुःखभरः।)

**केयूरकः**—इदमपरमुत्थितमितो महदद्भुतम्।

इन्द्रायुधो योऽम्भसि पातितः स
केनापि दिव्यमुनिना सममुत्थितोऽभूत्।
उन्मज्जति स्वयमियं तु न जातु नून-
मन्तर्ह्रदं निपतिता बत पत्रलेखा॥ २७॥

**विदूषकः**—को एसो चिरसलिलवाससेवालिअवक्कलजडाबन्धो तावसो?

(छाया—क एष चिरसलिलवासशैवालितवल्कलजटाबन्धस्तापसः?)

मदलेखातमालिके—णं एसो दिट्ठपुव्वो विअ ।

(छाया—नन्वेष दृष्टपूर्व इव ।)

महाश्वेता—(निरूप्य सप्रत्यभिज्ञमिव) तरलिए, पेक्ख । जाणासि खु तुमं वि । णं अय्यकइञ्जलो एसो ।

(छाया—तरलिके, पश्य । जानासि खलु त्वमपि । ननु आर्यकपिञ्जल एषः ।)

तरलिका—(दृष्ट्वा) सच्चं सो एव्व सहअरो इमो देवस्स पुण्डरीअस्स ।

(छाया—सत्यं स एव सहचरोऽयं देवस्य पुण्डरीकस्य ।)

कादम्बरी—कहं एसो सो जो कइञ्जलो कइञ्जलोत्ति बहुसो अय्याए पसंसीअदि ।

(छाया—कथमेष स यः कपिञ्जलः कपिञ्जल इति बहुश आर्यया प्रशस्यते ।)

(प्रविश्य)

कपिञ्जलः—दिष्टया निस्तीर्णशापोऽस्मि । किंतु

चन्द्रापीडस्य यथा दूये चिरसंस्तुतस्य विरहेण ।
आजन्मसौहृदनिधेर्न तथाहं पुण्डरीकस्य ॥ २८ ॥

कथमिव तथा कृतप्रतिज्ञोऽहमन्तरा सुहृदमालोकये महाश्वेताम् । तदपि तावदाश्वासनीयैव प्रत्यग्रप्रियतमाभिषङ्गजनितनिर्वेदा कादम्बरी । (उपसृत्य) भद्रे, अविधवे भूयास्तम् ।

**उभे**—(अञ्जलिं बद्ध्वा सास्रम्) कहं दे मुहादो णिग्गइअ वअणं पच्चक्खविवरिअं आसि ?

(छाया—कथं ते मुखान्निर्गत्य वचनं प्रत्यक्षविपरीतमासीत् ?)

**कपिञ्जलः**—भद्रे, मैवमत्रभवतीभ्यां मन्तव्यम् । श्रूयतामनयोः पुण्डरीकचन्द्रापीडयोरुपांशु निर्वृत्तम् । (कर्णे एवमिति यथावन्निवेदयति)

**महाश्वेता**—(किंचिदाश्वस्य) ठाणे अणुकम्पिदह्मि कालन्तरम्मि वा णाहं उज्जीवन्तेण तादेण । हा णाह पुण्डरीअ, देहन्तरम्मि वि अणुबद्धाणुराअस्स दे अहं एव्व मिच्चुभूदह्मि ।

(छाया—स्थाने अनुकम्पितास्मि कालान्तरे वा नाथमुज्जीवयित्रा तातेन । हा नाथ पुण्डरीक, देहान्तरेऽपि अनुबद्धानुरागस्य ते अहमेव मृत्युभूतास्मि ।)

**कादम्बरी**—(निश्वस्य) चिट्ठउ दाव अण्णा मणोरहपरम्परा । राअउत्तो एव्व संदिट्ठो चन्दोत्ति एत्थ ण विसंवादो । अण्णहा कहिं वा से तह एक्कन्तसोम्मत्तणं ।

(छाया—तिष्ठतु तावदन्या मनोरथपरम्परा । राजपुत्र एव संदिष्टश्चन्द्र इत्यत्र न विसंवादः । अन्यथा कथं वा तस्य तथा एकान्तसौम्यता ?)

**महाश्वेता**—अय्य, तुह उण कुदो एत्तिअं समअं दंसणं वि दुल्लहं आसि ?

(छाया—आर्य, तव पुनः कुत एतावन्तं समयं दर्शनमपि दुर्लभमासीत् ?)

**कपिञ्जलः**—किं करोम्यशक्यप्रतिक्रियेषु ?

पार्श्वे गुरोः कतिपयानि दिनान्युषित्वा
सख्युर्ममायुरभिवर्धयतो विधानैः ।
शापेन कस्यचिदनुप्रविशन्नथाह-
मिन्द्रायुधस्य वपुरद्य समाश्रितोऽस्मि ॥ २९ ॥

**केयूरकः**—तर्हि, किंनरमिथुनानुसारी युवराजोऽपि भवतैवेमं प्रदेशमनुप्रापितः स्यात् ।

**कपिञ्जलः**—अथ किम् ।

**केयूरकः**—(साञ्जलिबन्धम्)

तर्हि क्व पत्रलेखा संप्रति याता क्व तौ भवत्सुहृदौ ।
शापवशादन्यशरीरे वर्तिष्येते निवेद्यमेतावत् ॥ ३० ॥

**कपिञ्जलः**—सर्वमपि भगवतः श्वेतकेतोरहमपि ज्ञातुमिच्छामि । चन्द्रमसस्तु वाक्यमनुपालनीयमिति भवत्यौ पुनः पुनरभ्यर्थये ।

(इति निष्क्रान्तः)

**सर्वाः**—(साश्चर्यम्) जं अदिट्ठं जं अस्सुदं दुवे वि दे एक्कपए अणुभविज्जन्ति ।

**(छाया—यददृष्टं यदश्रुतं द्वे अपि ते युगपदनुभूयेते ।)**

**कादम्बरी**—सहि, एव्वं गए किं मए कादव्वंति तुमं एव्व मे उवदिस ।

(छाया—सखि, एवं गते किं मया कर्तव्यमिति त्वमेव मे उपदिश।)

**महाश्वेता**—दाणिं खु मे ण परिप्फुडा कहा णाहस्स। आसासणवअणमेत्तेण वि मए वारिआसि अणुमरणादो। ता तुए किं कादुं पारिज्जइ? जाए पच्चअणिमित्तं दइअदेहो एव्व पुरदो चिट्ठइ।

(छाया—इदानीं खलु मे न परिस्फुटा कथा नाथस्य। आश्वासनवचनमात्रेणापि मया वारितासि अनुमरणात्। तत् त्वया किं कर्तुं पार्यते? यस्याः प्रत्ययनिमित्तं दयितदेह एव पुरतस्तिष्ठति।)

**कादम्बरी**—कहं अय्या एव्वं भणइ?

(छाया—कथमार्या एवं भणति?)

**सख्यः**—(पादयोर्निपत्य) भट्टिदारिए, अणुवट्टेहि णिदेसं अय्याए।

जो को वि पडिमाविसेसो परिचरिज्जन्तो अणुग्गहं कुणइ।
किं उण प्पच्चक्खदेवो चन्दो आराहिदप्पसण्णोत्ति॥३१॥

(छाया—भर्तृदारिके, अनुवर्तस्व निदेशमार्यायाः।

यः कोऽपि प्रतिमाविशेषः परिचर्यमाणोऽनुग्रहं करोति।
किं पुनः प्रत्यक्षदेवश्चन्द्र आराधितप्रसन्न इति॥)

**केयूरकः**—देवि, किमन्यन्मन्यसेऽद्यापि। पश्य,

पुरहरललाटनयने शलभत्वमुपागतेनापि।
पुनरपि न किं नु घटिता दयितेन मनोभवेन रतिः॥३२॥

**कादम्बरी**—( स्वगतम् ) अलङ्घणिज्जो वल्लहसमाअमाहिलासो । ( प्रकाशम् ) जह तुह्मे मण्णह । (केयूरकं प्रति) तुमं दाव जह तादो अम्बा सव्वं गन्धव्वकुलं वि मह कए णिव्वेदं ण उव्वहइ तह इमं उत्तन्तं णिवेएहि ।

(छाया—अलङ्घनीयो वल्लभजनसमागमाभिलाषः । यथा यूयं मन्यध्वे । त्वं तावत् यथा तातोऽम्बा सर्वं गन्धर्वकुलमपि मम कृते निर्वेदं नोद्वहति तथा इमं वृत्तान्तं निवेदय ।)

**केयूरकः**—( स्वगतम् ) दिष्ट्या निश्चितशरीरधारणा देवी । ( प्रकाशम् ) यथाज्ञापितं देव्या ।

(इति निष्क्रान्तः)

**कादम्बरी**—हला, उवणेह पुप्फाणुलेवणाइं जेहिं अलंकरिदव्वो मए णाहो ।

(छाया—हला, उपनयत पुष्पानुलेपनानि यैरलंकर्तव्यो मया नाथः ।)

( सख्यौ तथा कुरुतः )

**कादम्बरी**—(विदूषकं प्रति) अय्य, तुमं एव्व पच्चक्खिअसव्ववुत्तन्तो आसासेहि मेहणादप्पमुहं कुलउत्तराअलोअं । उज्जइणीगअस्स गुरुअणस्स वि विसज्जेहि जहउत्तं ।

(छाया—आर्य, त्वमपि प्रत्यक्षितसर्ववृत्तान्तः आश्वासय मेघनादप्रमुखं कुलपुत्रराजलोकम् । उज्जयिनीगतस्य गुरुजनस्यापि विसर्जय यथावृत्तम् ।)

**विदूषकः**—( उत्थाय सविषादम् ) कहं राअलोअं परिअत्थावेमि ? कहं वा णिवेएमि गुरुअणस्स ?

(छाया—कथं राजलोकं पर्यवस्थापयामि ? कथं वा निवेदयामि गुरुजनस्य ?)

(इति परिक्रामति)

**कादम्बरी**—सहिओ, इदो एह । जहणिद्दिट्ठं करेह्म ।

(छाया—सख्यः, इत एत । यथानिर्दिष्टं कुर्मः ।)

(इति निष्क्रान्ताः सर्वे)

---

**सप्तमोऽङ्कः ।**



# अष्टमोऽङ्कः ।



(ततः प्रविशति वीतंसहस्तो मातङ्गकः)

**मातङ्गकः**—दिट्ठशिआ एशे खु जम्बुणिउञ्जम्मि शुए । आव वागुलं पशालेमि ।

(छाया—दिष्ट्या एष खलु जम्बूनिकुञ्जे शुकः । यावत् वागुरां प्रसारयामि ।

(ततः प्रविशति शुकरूपो वैशम्पायनः)

**शुकः**—(उत्स्वप्नायते) प्रिये गन्धर्वराजनन्दिनि महाश्वेते, प्रसीद । परिगृह्यतामयं पादप्रणयी जनः ।

अनिदंप्रथमोऽनुरागबन्धः
  स्मृतजन्मान्तरसंस्तवं मनो मे ।
विदिता भवती च सानुतापा
  कथमेतद्विषहे वियोगदुःखम् ॥ १ ॥

**मातङ्गकः**—(विहस्य) कहं एशे इशिणो विअ शुमरिअपुव्वजणणउत्तन्तो पच्चादावेण किलन्दो अय्यमहाशेदं आहूएदि ।

(छाया—कथमेष ऋषिरिव स्मृतपूर्वजन्मवृत्तान्तः पश्चात्तापेन क्लान्त आर्यमहाश्वेतामाह्वयति ।)

(इति अङ्गुल्या वागुरां चालयति)

**शुकः**—(प्रबुध्य पुरतो दत्तदृष्टिरात्मगतम्) कोऽयमनुमेयक्रूरजातिः किंकर इव कृतान्तस्य क्रोडीकरोति मां वागुरया? (सनिर्वेदम्) अथवा,

अवधीरितसाधुभाषितानां
मुहुरङ्गीकृतसत्त्वविक्रियाणाम् ।
अनुतापकराणि मादृशाना-
मनुवेलं न किमापतन्त्यघानि ॥ २ ॥

(प्रकाशम्) भद्र, कस्त्वम्? किमर्थमेष बद्धोऽस्मि? यद्या-मिषाभिलाषस्तव किमिति न सुप्त एव निहतोऽस्मि? क्रीडामात्रं यदि, मां विमुञ्च दयितावलोकनोन्मनसम् ।

**मातङ्गकः**—शुणाहि । इदो पक्कणणिवाशिणोए अह्म शामिशुदाए तुज्झ गहणणिमित्तं शदशो पुलिशा अणुप्पेसिदा । मए वि पुडमं विज्झाडवीए विलइआखेडेण अण्णेशिदे तुमं ण आशादिदे । अय्य उण अह्मए शुकिदवशेण तुमं दिट्ठो । ता हग्गे शमप्पेमि शामिशुदाए । तं एव्व अब्भत्थेहि । शामिणी एव्व पहवइ तुज्झ बन्धाह मोक्खाह वा ।

(छाया—शृणु । इतः पक्कणनिवासिन्या अस्माकं स्वामिसुतया तव ग्रहणनिमित्तं शतशः पुरुषा अनुप्रेषिताः । मयापि प्रथमं विन्ध्याटव्यां विरचिताखेटेनान्वेषितस्त्वं नासादितः । अद्य पुनरस्माकं सुकृतवशेन त्वं दृष्टः । तस्मात् हस्ते समर्पयामि स्वामिसुतायाः । तामेवाभ्यर्थय । स्वामिन्येव प्रभवति तव बन्धाय मोक्षाय वा ।)

**शुकः**—( सजुगुप्सम् ) हा हतोऽसि । दुरात्मन् मुनिखेटक पुण्डरीकापशद,

हृद्यामोदैः कृतकशिपुना हव्यशेषैस्त्वयादौ
पुण्योपान्तेष्वथ निवसता दिव्यलोकाश्रमेषु ।
दूरान्मूर्खैरपि परिहृतामेत्य मातङ्गवाटीं
भोज्यं क्रव्यं तदशुचि शुनां विस्रमुच्छिष्टमासीत् ॥३॥

( प्रकाशम् ) भद्र जातिस्मरो मुनिरस्मि । तवापि मामस्मात् पापसंकटादुद्धरतो धर्म एव । तद्विसृज माम् । केनचिददृष्टेऽत्र शङ्कापि न ते प्रत्यवायस्य ।

**मातङ्गकः**—(विहस्य ) मुद्ध तुमं शुणाहि ।

किं वा कआ उण किलदि पुलिशेण अशङ्किदं कम्मो ।
शालीलगोअलाइ पञ्चवि भूदाइ पेक्खई सव्वं ॥ ४ ॥

(छाया—मुग्ध, त्वं शृणु ।)

किं वा कदा पुनः क्रियते पुरुषेणाशङ्कितं कर्म ।
शरीरगोचराणि पञ्चापि भूतानि पश्यन्ति सर्वम् ॥

**शुकः**—(निश्वस्यात्मगतम्) प्राणत्यागं विना न कश्चिदप्यत्र परिहारः ।

हारीतस्य न हि श्रमः सफलतां नीतो मया पोषितु-
र्दृष्टस्यापि कपिञ्जलस्य सुहृदो नैवोपदेशः श्रुतः ।
गत्वा चैत्ररथं वनं च न महाश्वेतामुखं वीक्षितं
किं जन्मान्तरसंस्मृतावपि मया पापात्मना निर्मितम् ॥ ५ ॥

**मातङ्गकः**—(आदाय) इमं खु शमप्पिअ शामिणीशआशादो पालितोशिअं गेह्णामि ।

(**छाया**—इमं खलु समर्प्य स्वामिनीसकाशात् पारितोषिकं गृह्णामि ।)

(इति पक्कणाभिमुखं परिक्रामति)

**शुकः**—(अग्रे निरूप्य) हन्त, कथमकथितोऽप्यधिगम्यते स्नुग्वनच्छन्नसंनिवेशोऽयमुद्देशः पक्कणस्येति । यतः,

प्रेङ्खद्द्रोमहिषीकरङ्ककबलीकारैकहेवाकिनः
कर्णारुंतुदमुच्चकैः कलकलं कुर्वन्ति कौलेयकाः ।
धूमः पामरदारिकाभिरभितः संभृज्ज्यमानेष्वसृङ्-
मेदोमांसवसास्थिषु प्रथयति घ्राणेन्द्रियोपप्लवम् ॥ ६ ॥

हन्त, ईदृग्दशेनापि मया पुत्रशोकात्परित्यज्य राज्यं चैत्ररथे तपस्यतोस्तातशुकनासतारापीडयोः पादमूलेऽवस्थातुमपि नार्जितमूर्जितं कर्म । सर्वथा देहत्याग एव हि कल्पते मम सुखाय ।

(इति निष्क्रान्तौ)

**मिश्रविष्कम्भः ।**

(ततः प्रविशति तारापीडो विलासवती शुकनासश्च)

**तारापीडः**—चिराय खलु विस्मृतोऽस्माभिरुत्पन्नवैराग्यैरारण्यकव्रतनियतैर्नागरिकोपभोग्यो विषयसमवायः । तथाहि—

उद्यानेष्विव काननेष्वपि शिलापट्टेषु तल्पेष्विव
प्रावारेष्विव वल्कलेषु वयसां नादेषु गीतेष्विव ।
क्रीडापुष्करिणीष्विवाचलजलस्यन्देषु सौधेष्विव
क्षोणीभृत्कुहरेषु नो मन इदं भूयस्तरां मोदते ॥ ७ ॥

किं तु षोडशवर्षाणि पुत्रशोकातुरोऽस्म्यहम् ।
तथापि सांप्रतं प्राणाः शल्यायन्ते विशेषतः ॥ ८ ॥

हा वत्स चन्द्रापीड,

कृतसमुचितदारसंग्रहे त्वयि (६-३९)

(इत्यादि पठन् रोदिति)

**विलासवती**—(सास्रम्) अय्यउत्त, सोण्णा काअम्बरी 'केत्तिअं कालं असम्पुण्णमणोरहा जीविस्सं'ति ओहिरिअदेव्वसासणा कउज्जमा अच्छोदसरप्पवेसस्स ।

(छाया—आर्यपुत्र, स्नुषा कादम्बरी 'कियन्तं कालमसंपूर्णमनोरथा जीविष्यामि'इति अवधीरितदैवशासना कृतोद्यमा अच्छोदसरःप्रवेशाय ।)

**शुकनासः**—श्रुतं मयाप्येतत् । अतः खलु तया प्रतिषिद्धः कौमुदीमहोत्सवोऽपि । पश्यतु तावत् देव एव तस्या अनुमत्यभावेन शरत्समयावतारमपि कृतान्तरायम् । तथाहि—

निर्निद्रैरपि नोद्गिरन्ति कुसुमैः सप्तच्छदाः सौरभं
साशङ्काः सविधेऽपि पद्मसरसां हंसाः कलं कूजितुम् ।
अम्भो न स्पृशति प्रसादमुचितं जातेऽप्यगस्त्योदये
पाणिस्थेऽपि नवेक्षुधन्वनि दृशं प्रायो न दत्ते स्मरः ॥ ९ ॥

**तारापीडः**—देवि, किमत्र प्रतिपन्नं महाश्वेतया ?

**विलासवती**—(सबाष्पम् ) सा वि पुण्डरीअपडिच्छन्दसणाहेण चित्तफलएण सह तह एव्व ववसिआ ।

(छाया—सापि पुण्डरीकप्रतिच्छन्दसनाथेन चित्रफलकेन सह तथैव व्यवसिता ।)

**तारापीडः**—(विमृश्य) देवि,

चान्द्रं मण्डलमानने तव ननु स्वप्ने प्रविष्टं पुरा
त्वत्सख्या अपि पुण्डरीकमथ चोत्पन्नौ तथैवात्मजौ ।
यच्च ह्लादनयोस्तदायति सुखं दैव्या किलोक्तं गिरा
देवि प्रत्ययवद्भिरत्र समयोऽस्माभिः प्रतीक्ष्यो भवेत् ॥१०॥

**शुकनासः**—यथाह देवः ।

अवेक्षणीयमव्यग्रैः परिपाकोन्मुखं फलम् ।
साहसिक्यश्च वनिताः किमत्र करवामहै ॥ ११ ॥

(सर्वे वैयाकुलीं नाटयन्ति)

(प्रविश्य पटाक्षेपेण ससंभ्रमः)

**केयूरकः**—(प्रणिपत्य) महाराज, सुमहदिदमद्भुतमभिमतं चोपलब्धम् ।

**तारापीडः**—निवेद्यतां तावत् ।

**केयूरकः**—या तदा तादृशि व्यतिकरे निपत्याच्छोदे निमग्ना पत्रलेखा, सा भर्तुः शुश्रूषणार्थमवतीर्णा रोहिणी किल ।

**शुकनासः**—नान्यथा तादृशमुपलभ्येत सौशील्यम् ।

**केयूरकः**—सा संप्रति भर्त्रा सह चान्द्रमस एव भुवनेऽवस्थापितापि ध्यानाधिगतात् साहसात् गन्धर्वराजदुहितरौ निवारयितुं साक्षादिहागता ।

**विलासवती**—अच्चरिअं ! पउदिसिद्धं खु साहुत्तणं दिव्वनारीणं ।

(छाया—आश्चर्यम् ! प्रकृतिसिद्धं खलु साधुत्वं दिव्यनारीणाम् ।)

**केयूरकः**—कथ्यते च तया 'अद्यैव भाविनी चैतन्यप्राप्तिश्चन्द्रापीडपुण्डरीकयोः' इति ।

**विलासवती**—(सास्रम्) आसासणमेत्तं एदं । कुदो अह्माणं तारिसं सुकअं ।

(छाया—आश्वासनमात्रमिदम् । कुतोऽस्माकं तादृशं सुकृतम् ।)

**केयूरकः**—न तथा मन्तव्यम् । अस्मद्विस्रम्भणाय च सा रोहिणी प्रभावादाविर्भावयति किल विषयान्तरे धृतापरशरीरौ ताविहैव ।

**शुकनासः**—उपपद्यते । ततः खलु विज्ञापयति भर्तृदारिका संनिहितेन भवितव्यं तत्र गुरुजनेनेति ।

**तारापीडः**—किमतोऽपि नः कर्तव्यान्तरम् ?

(सर्वे उत्थाय परिक्रामन्ति)

**विलासवती**—केऊरअ, इमं पसङ्गं कहिअ आणेहि सहिं मणोरमं वि ।

**(छाया—केयूरक, इमं प्रसङ्गं कथयित्वा आनय सखीं मनोरमामपि ।)**

**केयूरकः**—(निष्क्रम्य प्रविश्य च) देवि, ताः सर्वा अपि महाराजसंनिधिं परिहरन्त्यस्तिष्ठन्ति । ततो यूयमासनेषु निषीदत ।

(सर्वे तथा कुर्वन्ति)

**केयूरकः**—यावदहमुद्योजयामि रोहिणीं यथाभिमतनिर्वहणाय ।

(इति निष्क्रान्तः)

(आकाशे)

अवहेह एदं ।

**(छाया—अवधत्त इदम् ।)**

**शुकनासः**—नूनं संमुखयति नो दाक्षायणी निजं प्रभावं निरूपयितुम् ।

**तारापीडः**—(दृष्ट्वा) अये ! महतेऽद्भुतायैतत् । यदिह दृश्यते दिग्विजयप्रसङ्गात् दशार्णेषु दृष्टपूर्वा विदिशाराजधानी ।

त एव विपणीपथाः स्फुरदनर्घरत्नोच्चया-
स्त एव विपुलश्रियो भवनसंनिवेशा अपि ।
विफुल्लसलिला वधूस्तनतटीपटीरद्रवै-
र्मुदं दिशति सैव मे यदिह वेत्रवत्यापगा ॥ १२ ॥

**शुकनासः**—हस्तेन दर्शयन् ,

आस्थानेऽस्मिन्महितविभवे सेवितो राजपुत्रः
कुर्वन् गोष्ठीमुचितविषयामास्थितो भद्रपीठम् ।
राजा कश्चिन्निवसति वयोरूपयोः साम्ययोगा-
च्चन्द्रापीडं स्मरयति च नौ यौवराज्याभिषिक्तम् ॥ १३ ॥

**तारापीडः**—अहं तु वत्स एवेत्येनं प्रत्येमि । तथाहि—

पूर्णेन्दुप्रतिमं तदेव वदनं चक्षुस्तदेवोत्पल-
च्छायं सैव दिगन्तवारणकरद्राघीयसी दोर्द्वयी ।
प्रत्याख्यायि सुपर्वपर्वततटं वक्षस्तटं वीक्ष्यते
वत्सस्यैव निकाममस्य निकमौ बिम्बानुबिम्बावुभौ ॥ १४ ॥

**विलासवती**—हा वच्च, कहं एदं । दंसेहि पणअं गुरुअणम्मि ।

**(छाया—हा वत्स, कथमेतत् । दर्शय प्रणयं गुरुजने ।)**

**शुकनासः**— कथमियं कार्तस्वरवेत्रगर्भिताञ्जलिः प्रतिहारी विजिज्ञापयिषतीव वैदिशं महाराजम् ।

(नेपथ्ये)

देव, एसा का वि दक्खिणापहादो चण्डालकण्णआ किं पि सुअरअणं पाहुडीकादुं पडिहारं अहिचिट्ठइ ।

(**छाया**—देव, एषा कापि दक्षिणापथात् चण्डालकन्यका किमपि शुकरत्नं प्राभृतीकर्तुं प्रतिहारमधितिष्ठति ।)

(पुनर्नेपथ्ये)

को दोषः ? प्रवेश्यतामियम् ।

**विलासवती**—का उण इअं माअङ्गदारअसीसधारिअं रअणपञ्जरं उग्घाडिअ सुअं करेण धारेन्ती अच्चरिअरूवसोहग्गा इत्थिआ ?

(**छाया**—का पुनरियं मातङ्गदारकशीर्षधारितं रत्नपञ्जरमुद्घाट्य शुकं करेण धारयन्ती आश्चर्यरूपसौभाग्या स्त्री ?)

(नेपथ्ये)

अये ! अस्थाने रूपनिष्पादनप्रयत्नः कमलासनस्य । इयं हि—

वासः पल्लवरागकान्ति दधती वंशीदलश्यामला
बिभ्राणा मणिकङ्कणांशुखचिते वामप्रकोष्ठे शुकम् ।
कालिन्दीं नवरत्नवर्धकवनीसंध्यायितस्रोतसं
शैवालस्तबकाञ्चितोपलतिकामन्वेति शातोदरी ॥ १५ ॥

**शुकनासः**—सम्यगभिहितं पत्या दशार्णानाम् ।

(पुनर्नेपथ्ये)

भो महाराअ, एसो वेसम्पाअणो णाम सुओ सअलकलापारं गओ तेल्लोक्करअणभूदो सव्वरअणेक्कभाअणस्स दे पाअमूलं पाविदो ।

(छाया—भो महाराज, एष वैशम्पायनो नाम शुकः सकलकलापारं गतः त्रैलोक्यरत्नभूतः सर्वरत्नैकभाजनस्य ते पादमूलं प्रापितः ।)

**शुकनासः**—(सस्मरणम्) हा वत्स, ममैव हतात्मनोऽमर्षादीदृशीं दशामुपगतोऽसि ।

**तारापीडः**—आर्य, धैर्यमवलम्ब्यताम् । किं कुर्मो वयमप्रतीकारदारुणेऽस्मिन् विधिवैशसे ?

(नेपथ्ये)

श्रीमच्छूद्रकमहाराज, अवधार्यतामिदं चाटु—

स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥ १६ ॥

**विलासवती**—हद्धि, हद्धि ; एसो ण केवलं णामदो, सरेण वि अणुकरेदि मे वच्चम् । हा देव्व किं इमं तारिसीए आकिदीए विओएसि ?

(छाया—हा धिक्, हा धिक् ; एष न केवलं नामतः, स्वरेणापि अनुकरोति मे वत्सम् । हा दैव, किमिमं तादृश्या आकृत्या वियोजयसि ?)

(नेपथ्ये)

एवं बुद्धिपूर्वा वाक्प्रवृत्तिरस्यां जातौ नास्माभिर्जातु लक्षिता,

**तारापीडः**— तथैवैतत् यथाभिहितं राजचक्रेण । तथा ह्येषः—

कृतसमुचिताभिमुख्यः सलीलमुन्मुच्य दक्षिणं चरणम् ।
पठति स्फुटप्रयत्नस्थानस्वरवर्णशब्दसंस्कारम् ॥ १७ ॥

(नेपथ्ये)

कस्त्वमेवंविधो विहंगमविशेषः ?

(पुनर्नेपथ्ये)

राजन् , क्षणमवहितमनाः शृणु ;

अस्ति विन्ध्याटवी नाम लोपामुद्रापतेः पदम् ।
वसन् यत्रैव काकुत्स्थश्चक्रे रक्षःक्षयं शरैः ॥ १८ ॥

**तारापीडः**—प्रायः स्वकीयमाधुनिकं जन्म व्यतीतकथामुखमुपन्यस्यति ।

**शुकनासः**—(साश्रुगद्गदम् ) हा वत्स वैशम्पायन, एवं तैरश्चे जनुषि पतितोऽसि ।

(इति मुह्यति)

**विलासवती**—कहं णिमिलिअलोअणो अय्यसुअणासो ।

**(छाया—कथं निमीलितलोचन आर्यशुकनासः ।)**

**तारापीडः**—आर्य, संस्थापयात्मानम्।

औदार्यं संपदि ज्ञाने वैराग्यं युधि विक्रमः।
पुंसामनीर्ष्या पाण्डित्ये धैर्यं चापदि शोभते ॥ १९. ॥

**शुकनासः**—(कथंचिदाश्वस्य) क्व मे वत्सः?

**तारापीडः**—प्रत्यासीदति वत्सयोः पुनर्दर्शनावसरः। संप्रति निशम्यतामनेन वर्ण्यमानमैतिह्यम्।

**शुकनासः**—किं पुनः प्रवृत्तममुनात्मनः कथां कथयितुम्?

**तारापीडः**—अथ किम्। मयापि प्रमुग्धमार्यमाश्वासयतैवायमियानवधृतो वाक्यार्थः।

**शुकनासः**—कथमिव?

**तारापीडः**—

तत्रायातः शुकत्वं किल मृगयुभयाज्जातु हारीतनीतो
जाबालेर्ज्ञातजन्मान्तरगतचरितः स्वस्य वत्सस्य चैषः।
गच्छन् गन्धर्वकन्यासविधमथ पुनर्गोचरं दैवयोगात्
प्राप्तो मातङ्गपुत्र्या क्षपयति कतिचित्पञ्जरे वासराणि ॥ २० ॥

इति।

**विलासवती**—अदो वरं उण उत्तन्तं इमिणा कहिज्जन्तं सुणिमो।

(छाया—अतः परं पुनर्वृत्तान्तमनेन कथ्यमानं शृणुमः।)

(नेपथ्ये)

एवमतिक्रामति कालेऽद्य प्रत्युषसि उन्मीलितलोचनो यदैष जनः, तदा च—

धृतं कनकपञ्जरे स्वमनया शुभाकारया
विभाव्य दिविषत्पुरप्रतिनिधिं पुनः पक्कणम् ।
किमेतदिति वेदितुं ह रहयामि मौनव्रतं
न यावदियमागता तव पदान्तिकं तावता ॥ २१ ॥

(सर्वे आश्चर्यं नाटयन्ति)

(पुनर्नेपथ्ये)

किमर्थमनयैवमापातजुगुप्सितमनुपातमनोहरं च व्यवहृतमिति विविदिषामः ।

**तारापीडः**—अस्माकमपि श्रोतुमेतत्कुतूहलाकुलं हृदयम् ।

(नेपथ्ये)

इयत्यर्थेऽहमपि देव इवानपगतकौतुकोऽस्मि ।

**शुकनासः**—किमपि मागङ्गकन्यका स्वयं व्याजिहीर्षुरिव ।

(नेपथ्ये)

भो भुवणभूसण रोहिणीरमण काअम्बरीलोअणाणन्दचन्द, कहं दाणिं वि जोअबलगहिअदेहन्तरं अत्ताणं ण पडिबुज्झसि ?

(छाया—भो भुवनभूषण रोहिणीरमण कादम्बरीलोचनानन्दचन्द्र, कथमिदानीमपि योगबलगृहीतदेहान्तरमात्मानं न प्रतिबुध्यसे ?)

विलासवती—दिट्ठिआ लम्भिओ मह पुत्तओ जम्मन्तर-सुमरणम् ।

(छाया—दिष्ट्या लम्भितो मम पुत्रको जन्मान्तरस्मरणम् ।)

(नेपथ्ये)

एसह्मि अहं तुह सहोअरा इमस्स पुण्डरीअस्स जणणी महलच्छी । माअङ्गजाइत्तणं उण लोअसंपक्कपरिहारिणीए पआसिअं मए ।

(छाया—एषास्म्यहं तव सहोदरा अस्य पुण्डरीकस्य जननी महालक्ष्मीः । मातङ्गजातित्वं पुनर्लोकसंपर्कपरिहारिण्या प्रकाशितं मया ।)

शुकनासः—अन्यथा कुत इदमतिशयिताशेषरमणीरामणीयकं रूपम् ।

(पुनर्नेपथ्ये)

एसो मह पुत्तओ अत्तणो अविणएण दिव्वेसिभावादो माणुसत्तणं, तदो वि विहंगमत्तणं उवगओ । ता इदो वि णिकट्ठअरं दसं मा पविसदुत्ति तह मए णिगहीदो जह साणुदावो हवे ।

(छाया—एष मम पुत्रक आत्मनोऽविनयेन दिव्यर्षिभावात् मानुषत्वं ततोऽपि विहंगमत्वमुपगतः । तदितोऽपि निकृष्टतरां दशां मा प्रविशत्विति तथा मया निगृहीतो यथा सानुतापो भवेत् ।)

**तारापीडः**—किं नाम न कारयेत्पुत्रवत्सलता ?

(नेपथ्ये)

दुवेहिं वि तुज्झेहिं समसावावसाणेहिं होदव्वं ति तुज्झ समीवं मए पाविदो। ता अणुहोहि सखिणा सह परिगहिअपुव्वदेहो वल्लहअणसमाअमसुहं। अणुमण्णेहि मं णिअं पअं ओगाहिदुम्।

**(छाया—द्वाभ्यामपि युवाभ्यां समशापावसानाभ्यां भवितव्यमिति तव समीपं मया प्रापितः। तदनुभव सख्या सह परिगृहीतपूर्वदेहो वल्लभजनसमागमसुखम्। अनुमन्यस्व मां निजं पदमवगाहितुम्।)**

**शुकनासः**—(साश्चर्यम्)

इति कथमियमुक्त्वा नन्दिनी दुग्धसिन्धो-
र्मणिवलयनिनादैर्घोषयन्ती दिगन्तान्।
विशति गगनमध्यं सिद्धविद्याधराद्यै-
र्व्यतिकरितविमानैः स्तूयमानानुभावा॥ २२॥

(नेपथ्ये)

प्राग्जन्मवृत्तमियतीः शरदोऽप्यजानन्
संमूढचित्त इव दुःखसुखेष्वभूवम्।
अस्या वचोभिरधुना प्रतिबोधितोऽहं
सुप्तप्रबुद्ध इव सर्वमपि स्मरामि॥ २३॥

सखे वैशम्पायन, अथवा पुण्डरीक, अपि भवानुत्कण्ठते महाश्वेतायाः ?

(पुनर्नेपथ्ये)

सखे चन्द्रापीड,

भक्तिः पित्रोः प्रकृतिसुलभा सैव या प्राक्तनी मे
मैत्री सैव प्रणयिनि जने या हि पूर्वं प्रवृत्ता।
रागः संप्रत्यपि स दयितासंश्रयो यः पुराभूत्
कामः किं तु त्वरयतितरां निःसहः कालहानेः ॥ २४ ॥

तारापीडः—

कथमयमनुस्मृतात्मव्यतीतजन्माभिषङ्गवृत्तान्तः।
कथयति चैतन्यकलां क्रमेण करणैर्निमीलद्भिः ॥ २५ ॥

अभिमतमधिगम्य पूर्वदेहं
सुकृतवशादनुपप्लवं प्रपित्सुः।
निमिषमपि जुगुप्सते निवस्तुं
सुजन इवान्यगृहे वपुष्यमुष्मिन् ॥ २६ ॥

विलासवती—हा कहं पमुद्धो एव्व मे वच्चो।

(छाया—हा कथं प्रमुग्ध एव मे वत्सः।)

शुकनासः—(स्वगतम्) अहो! देहान्तरगतमप्याकारसाम्यात् तमेव मन्यते देवी। (प्रकाशम्) देवि, मा शोचीः। सर्वमिदं परोक्षवृत्तमेव रोहिण्या साक्षात्कार्यते प्रभावेण।

**तारापीड:**—यथा तथा वा भवतु। नाहमतः परं सहे वत्सस्य वार्तेतरन्निरूपयितुम्।

**शुकनास:**—(नेपथ्यं प्रति) देवि दाक्षायणि, उपसंह्रियतामरुंतुदमिदम्।

(आकाशे)

सखिणा सह परिगहीदाभिमदविग्गहाणं तुह्माणं होदु णअणुच्चवो। अहं वि साहेमि चन्दलोअं कअसमुइअमङ्गलं पुण्डरीअं पेसिदुम्।

(छाया—सख्या सह परिगृहीताभिमतविग्रहयोर्युवयोर्भवतु नयनोत्सवः। अहमपि साधयामि चन्द्रलोकं कृतसमुचितमङ्गलं पुण्डरीकं प्रेषयितुम्।)

**विलासवती**—अह्मो महप्पहावत्तणं एदाए, जं दाणिं जहपुव्वं तवोवणं एव्व दीसइ। ण उण सो णअरी।

(छाया—अहो महाप्रभावत्वमेतस्याः, यदिदानीं यथापूर्वं तपोवनमेव दृश्यते। न पुनः सा नगरी।)

(नेपथ्ये)

**वैतालिक:**—

स्वाच्छन्द्यान्नियतेः सहस्रकिरणस्यास्तं समभ्येयुषो
बिम्बान्निर्गतया तयैव निजया पूर्णः कलासंपदा।

शक्नोत्येव निशापतिः कुमुदिनीं विश्लेषजातव्यथां
निर्विघ्नेन करावलम्बविधिना निर्मातुमामोदिनीम् ॥ २७॥

उपस्थिता तावत् तार्तीयीकी नियमवेला।

तारापीडः——एह्यार्य, इतो वयमच्छोदमुपयामः।

(तारापीडशुकनासौ निष्क्रान्तौ)

विलासवती——(नेपथ्यं प्रति) वच्चे काअम्बरि, विरदसाहसुज्जमा दाणिं कल्लाणविसेसजोग्गं णेवच्छं धारेहि मे वच्चं। वच्चे महासेदे, तुमं वि परिच्चइअणिअमवेसा मङ्गलालंकारधारिणी होहि।

(छाया——वत्से कादम्बरि, विरतसाहसोद्यमा इदानीं कल्याणविशेषयोग्यं नेपथ्यं धारय मे वत्सम्। वत्से महाश्वेते, त्वमपि परित्यक्तनियमवेषा मङ्गलालंकारधारिणी भव।)

(नेपथ्ये)

अब्भुवगअं सासणम्।

(छाया——अभ्युपगतं शासनम्।)

विलासवती——(नेपथ्यं प्रति) हला कुलवड्ढणे, एहि। आदिस मग्गं पण्णसालाए।

(छाया——हला कुलवर्धने, एहि। आदिश मार्गं पर्णशालायाः।)

(प्रविश्य)

कुलवर्धना——इदो इदो देवी।

(छाया—इत इतो देवी ।

(उभे परिक्रामतः)

(ततः प्रविशति कृतपरिष्कारं चन्द्रापीडशरीरमालोकयन्ती कादम्बरी)

**कादम्बरी**—णिव्वत्तिओ मए णाहस्स अमलसीअलेहिं अच्छोदजलेहिं मज्जणविही । धारिअपट्टंसुअस्स अणुलित्ताइ चन्दणरसेण अङ्गाइ । फुरन्तमणिमउडभासुरे सीसम्मि णिवेसिदाओ सुगन्धिओ मालिआओ । आलम्बिओ कण्ठे पुडमप्पणअसक्खिभूदो सेसहारो ।

(छाया—निर्वर्तितो मया नाथस्यामलशीतलैरच्छोदजलैर्मज्जनविधिः । धारितपट्टांशुकस्यानुलिप्तानि चन्दनरसेनाङ्गानि । स्फुरन्मणिमकुटभास्वरे शिरसि निवेशिता सुगन्धयो मालिकाः । आलम्बितः कण्ठे प्रथमप्रणयसाक्षिभूतः शेषहारः ।)

(इति साभिलाषं पश्यति)

**विलासवती**—जाव अहं दुजअच्चणपरस्स अय्यउत्तस्स उवअरणाइं सज्जीकरेमि ।

(छाया—यावदहं द्विजार्चनपरस्यार्यपुत्रस्योपकरणानि सज्जीकरोमि ।)

(कुलवर्धनया सह निष्क्रान्ता)

**कादम्बरी**—अहो ! ण जाणामि मन्जभाआ कदा उण महाभाएण सच्चवअणा करिज्जिस्सइ रोहिणी । (निमित्तं सूचयन्ती)

किं एदं अभूदपुव्वं फुरइ मे वामणअणं (निश्वस्य) अहवा, कअपुण्णाणं खु फलेन्ति सुणिमित्ताइ। होदु। जाव असण्णिहिदाओ सहिओ, ताव इमस्स चिराहिलसिएण आलिङ्गणेण णिव्वावेमि अणङ्गसंदावं। (इत्याश्लेषमभिनयन्ती सरोमाञ्चम्) ण खु मए आणन्दसाअरणिमग्गाए पारीअदि किं एदं ति वण्णेदुं। कहं पुलइअवक्खत्थलो जारिसो हिमघरम्मि अणुहूदो, तारिसो एव्व दाणिं वि पस्सविसेसो भाविअइ।

(छाया—अहो! न जानामि मन्दभाग्या कदा पुनर्महाभागेन सत्यवचना करिष्यते रोहिणी। किमिदमभूतपूर्वं स्फुरति मे वामनयनम्। अथवा, कृतपुण्यानां खलु फलन्ति सुनिमित्तानि। भवतु। यावदसंनिहिताः सख्यः, तावदस्य चिराभिलषितेनालिङ्गनेन निर्वापयाम्यनङ्गसंतापम्। न खलु मया आनन्दसागरनिमग्नया पार्यते किमिदमिति वर्णयितुम्। कथं पुलकितवक्षःस्थलो यादृशो हिमगृहेऽनुभूतस्तादृश एवेदानीमपि स्पर्शविशेषो भाव्यते।)

(प्रविश्य प्रत्यापन्नचैतन्यः)

**चन्द्रापीडः**—कान्ते कादम्बरि, कृतं शुचा साध्वसेन च। प्रत्युज्जीवितोऽहममृतनिर्विशेषेण तवामुना कण्ठग्रहेण।

प्रसह्य येन प्रतिपादितोऽयं
रथाङ्गनाम्नोरिव नौ वियोगः।
शापान्धकारः स कथंचिदासीत्
पूर्णेव पुण्येन ममापनीतः॥ २८॥

**कादम्बरी**—(साश्चर्यहर्षम्) ण खु सक्कुणोमि णअणे उम्मीलिअ पेक्खिदुं अविस्ससन्ती भाअधेआइं । (उन्मील्य) कहं सुत्तप्पबुद्धो विअ पडिवण्णजहपुव्वसव्वसोन्दरो राहुमुक्कमिअङ्कणिव्विसेससिरी अय्यउत्तो ।

(छाया—न खलु शक्नोमि नयने उन्मील्य प्रेक्षितुमविश्वसती भागधेयानि । कथं सुप्तप्रबुद्ध इव प्रतिपन्नयथापूर्वसर्वसौन्दर्यो राहुमुक्तमृगाङ्कनिर्विशेषश्रीरार्यपुत्रः ।)

**चन्द्रापीडः**—प्रिये चैत्ररथि,

अविदितपुरावृत्तः संमूढचित्त इवास्म्यहं
चिरमथ परिज्ञाता जन्मान्तरस्थितिरीदृशी ।
युगशतमिवानैषं कांश्चित् क्षणानपि सा कथं
कथय गमिता कष्टं दीर्घा त्वया विरहासिका ॥ २९ ॥

**कादम्बरी**—ण पारेमि अहं कहं वि उवलद्धं अय्यउत्तं परिच्चइअ खणं वि अण्णदो गन्तुं । ता को उण पिअसहि महासेदं णअणसुहाणुहवसंविभाइणीं करिस्सदि । णेवच्छविरअणाए गओ सहीअणो वि विलम्बइ ।

(छाया—न पारयाम्यहं कथमप्युपलब्धमार्यपुत्रं परित्यज्य क्षणमपि अन्यतो गन्तुम् । तत् कः पुनः प्रियसखीं महाश्वेतां नयनसुखानुभवसंविभागिनीं करिष्यति । नेपथ्यविरचनायै गतः सखीजनोऽपि विलम्बते ।)

(ततः प्रविशति केयूरकेणोपदिश्यमानमार्गा ससखीजना महाश्वेता)

**केयूरकः**—इत इतो भर्तृदारिका ।

**महाश्वेता**—(कर्णं दत्वा) किं भणह सहिओ? हिअअं वि अकालणे उस्ससिदं विअ मे पडिभादि। सुणिज्जइ कण्णामिअअन्तो अणुहूदअरो सरो कुमारस्स।

(छाया—किं मन्यथ सख्यः? हृदयमपि अकारणे उच्छ्वसितमिव मे प्रतिभाति। श्रूयते कर्णामृतायमानोऽनुभूतचरः स्वरः कुमारस्य।)

**तरलिका**—णिच्चिदो खु रोहिणीवअणेण सव्वो वि सुहागमो।

(छाया—निश्चितः खलु रोहिणीवचनेन सर्वोऽपि शुभागमः।)

**मदलेखातमालिके**—(दृष्ट्वा) भट्टिदारिए, एसो पुव्वाहिअदेहकान्ती देवीए समं जुवराओ दीसइ।

(छाया—भर्तृदारिके, एष पूर्वाधिकदेहकान्तिर्देव्या समं युवराजो दृश्यते।)

**केयूरकः**—साधु दृष्टं सखीभ्याम्।

आभाति यद्वदनमस्य धृतप्रसाद-
मम्भोदरुद्धपरिमुक्तमिवेन्दुबिम्बम्।
नेत्रे च भृङ्गचलतारकदर्शनीये
प्रातः प्रबुद्धकमलश्रियमश्नुवाते॥ ३०॥

**महाश्वेता**—दिट्ठिआ पडिवण्णजीविएण राअउत्तेण आणन्दिज्जइ सही काअम्बरी। (इति हर्षविसंष्ठुलं परिक्रामन्ती स्वगतम्) अवि णाम ओसिट्ठं वि रोहिणीवअणं सच्चं भवे?

(छाया—दिष्ट्या प्रतिपन्नजीवितेन राजपुत्रेण आनन्द्यते सखी कादम्बरी। अपि नामावशिष्टमपि रोहिणीवचनं सत्यं भवेत्?)

**केयूरकः**—(अन्यतो दृष्ट्वा)

अमृतकिरणबिम्बात्कोऽपि दिव्यः कुमारः
सललितमिह सख्या दत्तहस्तावलम्बः।
अवतरति विहायोवीथिकाया विलासी
धरणितलमयं स्यात्पुण्डरीकः स एव ॥ ३१ ॥

**तरलिका**—(निरीक्ष्य) सच्चं सो एव्व सहीए जीविएसरो एसो।

(छाया—सत्यं स एव सख्या जीवितेश्वर एषः।)

**महाश्वेता**—(सानन्दम्) दाणि मे सफलं जीविअधालणम्।

(छाया—इदानीं मे सफलं जीवितधारणम्।)

(ततः प्रविशति कपिञ्जलकरावलम्बी पुण्डरीकः)

**कपिञ्जलः**—सखे पुण्डरीक,

हित्वा वल्कलयोर्युगं परिधृतं दिव्यं दुकूलद्वयं
मौलौ रत्नमयं विमोचितजटाबन्धे किरीटं कृतम्।
रोहिण्या रचितस्तवैष रुचिरो वेषः पितुः शासनाद्
गार्हस्थ्यस्य भविष्यतः समुचितो गन्धर्वराज्यस्य च ॥ ३२ ॥

**पुण्डरीकः**—सा खलु भवानिवास्माकं परं निदानमखिलस्याभ्युदयजातस्य।

**कपिञ्जलः**—(महाश्वेतां हस्तेन दर्शयन्)

सेयं लोकान्तरगतमपि त्वां प्रवृत्तानुगन्तुं
वाक्यैरिन्दोर्मम च पुरतो भावि भद्रं निशम्य।
सप्रत्याशा कथमपि चिरं प्राणशल्यं दधाना
पातिव्रत्यप्रथमगणनापात्रमाश्वासयैनाम्॥ ३३॥

**पुण्डरीकः**—(महाश्वेतामुपगम्य)

एह्यालिङ्ग विलासिनि तव तप्तेन सुतप्तमङ्गेन।
अस्त्रमिवास्त्रैर्विजये तव तापं मदभितापेन॥ ३४॥

(उभावालिङ्गतः)

**चन्द्रापीडः**—देवि कादम्बरि, सत्येयं वाणी संपत् संपदमनुधावतीति। यतः—

एषा तव प्रियसखी चिरेण पर्युत्सुका महाश्वेता।
हंसीव हंसदुहिता मिलिता दयितेन पुण्डरीकेण॥ ३५॥

**कादम्बरी**—अह्मो! वल्लहसमागमणिव्वुदं पेक्खामि पिअसहिं।

(**छाया**—अहो! वल्लभसमागमनिर्वृतां पश्यामि प्रियसखीम्।)

(चन्द्रापीडपुण्डरीकौ उपगम्य परस्परं हस्तेन स्पृशतः)

**चन्द्रापीडः**—एवं नाम सौहृदमुपनयता परमुपकृतं हि नावन्योन्यशापेन।

**पुण्डरीकः**— भगवन् लोकपाल खण्डपरशुमौलिमण्डनमणे चन्द्र,

पूर्वापराधपरुषे मयि सानुकम्पो
नीत्वा शरीरमिदमात्मपदं सुधार्द्रैः ।
आप्यायितं न किरणैरकृथा यदि त्व-
मद्येदृशी मम कुतः कुशलानुभूतिः ॥ ३६ ॥

**कपिञ्जलः**—सुहृदौ चन्द्रापीडपुण्डरीकौ,

इत्थमन्योन्यमुद्भूतस्नेहसद्भावपेशला ।
वर्धतां युवयोर्मैत्री मित्रावरुणयोरिव ॥ ३७ ॥

**महाश्वेता**—राअउत्त, पकिदित्थो तुमं पुण्णेहिं मए दिट्ठो ।

(**छाया**—राजपुत्र, प्रकृतिस्थस्त्वं पुण्यैर्मया दृष्टः ।)

**कादम्बरी**—(महाश्वेतामालिङ्ग्य) सहि, दाणिं खु मह तुह्मेहिं मोइआ णिव्वूढा पडिण्णा ।

(**छाया**—सखि, इदानीं खलु मम युष्माभिर्मोचिता निर्व्यूढा प्रतिज्ञा ।)

**कपिञ्जलः**—जयतां गन्धर्वराजपुत्र्यौ ।

**सख्यः**—(सप्रणामम्) अवि कुसलं सहीणं दोण्णं वि एक्कपए वल्लहसमाअमेण ?

(**छाया**—अपि कुशलं सख्योर्द्वयोरपि एकपदे वल्लभसमागमेन ?)

**कादम्बरी**—सहिओ, णिअमट्ठिअस्स गुरुअणस्स अब्भुदअं इमं णिवेएह।

(छाया—सख्यः, नियमस्थितस्य गुरुजनस्याभ्युदयमिमं निवेदयत।)

**सख्यः**—तह।

(छाया—तथा।)

(इति सानन्दं नृत्यन्त्यः परिक्रामन्ति)

**महाश्वेता**—केऊरअ, तुमं वि हेमऊडं गदुअ गुरुजणस्स पिअवअणो होहि।

(छाया—केयूरक, त्वमपि हेमकूटं गत्वा गुरुजनस्य प्रियवचनो भव।)

**केयूरकः**—तथा (इति निष्क्रान्तः)

**मदलेखा**—एसो खु महाराओ कुदो वि सुदसुहप्पवुत्ती अय्यसुअणासेण समं इदोमुहं अहिवट्टदि।

(छाया—एष खलु महाराजः कुतोऽपि श्रुतशुभप्रवृत्तिरार्यशुकनासेन सममितोमुखमभिवर्तते।)

**तमालिका**—इदो दमिलधम्मिएण दंसिअपहाओ विलासवईमणोरमाओ।

(छाया—इतो द्रमिडधार्मिकेण दर्शितपथे विलासवतीमनोरमे।)

**सर्वाः**—महाराअ, संपुण्णा तुह्म मणोरहाओ ससखिणो जुवराअस्स चेअणलाहेण ।

(**छाया**—महाराज, संपूर्णा युष्माकं मनोरथाः ससखस्य युवराजस्य चैतन्यलाभेन ।)

(प्रविष्टौ तारापीडशुकनासौ विलासवतीमनोरमे विदूषकश्च)

**तारापीडशुकनासौ**—(विलासवतीमनोरमे प्रति) अपि श्रुता उभाभ्यामियममृतसंमिता वार्ता?

**विलासवतीमनोरमे**—किं दाणिं वि सोदव्वेण? एदे खु वच्चे वहूहिं समं सिञ्चन्ति अचरिअचन्दिअं अह्माणं णअणेसु ।

(**छाया**—किमिदानीमपि श्रोतव्येन? एतौ खलु वत्सौ वधूभ्यां समं सिञ्चत आश्चर्यचन्द्रिकामस्माकं नयनेषु ।)

**चन्द्रापीडपुण्डरीकौ**—(स्वगतम्)

यत्किंचिदप्यकुशलं विधिनोपनीत-
मात्माविनीतिजनितं किल मन्यमानः ।
जिह्रेति दर्शयितुमाननमर्हदग्रे
नूनं जनो विनयवान् सुलभानुतापः ॥ ३८ ॥

(उपसृत्य यथोचितं सर्वान् नमस्कुरुतः)

**मनोरमा**—ण खु विसेसो वेसम्पाअणस्स ।

(**छाया**—न खलु विशेषो वैशम्पायनस्य ।)

**शुकनासः**—अथ किम् ।

**कपिञ्जलः**—(तावुपगम्य) आर्यौ श्रूयताम् ।

मुनेरंशावतारस्त्वं श्वेतकेतोरियं श्रियः ।

पुत्रो वां पुण्डरीकोऽयं नान्यत् किमपि मन्यताम् ॥ ३९ ॥

**शुकनासः**—(सस्मरणम् ) सत्यमाह कपिञ्जलः ।

**मनोरमा**—दाणिं मए सुमरीअदि । दिण्णो खु मे वरो मन्दाइणीकमलवणविहारिणीए लच्छीए मच्चलोए णिअमट्ठिआ तुह्मेहिं समं माणुसी होऊण सविसेसाणुहवं करेमित्ति ।

(छाया—इदानीं मया स्मर्यते । दत्तः खलु मे वरो मन्दाकिनीकमलवनविहारिण्या लक्ष्म्या मर्त्यलोके नियमस्थिता युष्माभिः सह मानुषी भूत्वा सविशेषानुभवं करोमीति ।)

**शुकनासः**—साधु संवृत्तम् । अद्य हि नो मनः पुण्डरीके पक्षपाति ।

**तारापीडः**—तदद्य प्रभृति विशेषान्माननीयावार्यौ । (अन्यतोऽवलोक्य)

गायत्किंनरमप्सरोभिरभितः प्रक्रान्तनृत्तक्रियं
वल्गच्चारणमण्डलं मधुमदव्यालोलसिद्धाङ्गनम् ।
उद्यत्कौतुकयक्षमुत्सवरसव्यापृक्तविद्याधरं
शुद्धान्तेन सहागतौ कथमितो गन्धर्वराजावुभौ ॥ ४० ॥

(ततः प्रविशतो केयूरकेणोपदिश्यमानमार्गौ चित्ररथहंसौ मदिरागौर्यौ च)

**चित्ररथहंसौ**—(अन्योन्यं प्रति)

कन्यां वराय गुणिने गुरुभिः प्रदातुं
युक्तेत्ययं न सुलभोऽभवदर्थ एषः ।
मध्ये यदप्यकथनीयमभूदभद्रं
दिष्ट्या तदायतिसुखं भवतोऽद्य जातम् ॥ ४१ ॥

**मदिरागौर्यौ**—(अन्योन्यं प्रति) णं समुइअजामाउलम्भेण वड्ढइ सही ।

(छाया—ननु समुचितजामातृलाभेन वर्धते सखी ।)

**तारापीडशुकनासौ**—आये ! गन्धर्वसार्वभौमौ । सखायौ, इत इतः ।

**विलासवतीमनोरमे**—इदो इदो गन्धव्वराअमहिसीओ ।

(छाया—इत इतो गन्धर्वराजमहिष्यौ ।)

(अन्योन्यमालिङ्गतः)

**हंसः**—किमिदानीमपि विलम्बितेन ? अस्मिन्नेव शुभंयुनि मुहूर्ते वत्सयोरन्योन्याभिरुचिनिष्पन्नोऽपि लोकव्यवहरणाय करणीयः पाणिपीडनमहोत्सवः ।

**तारापीडशुकनासौ**—यदभिरुचितं सुहृदोः ।

**चित्ररथः**—(कादम्बरीं चन्द्रापीडहस्तेऽर्पयन्) जामातश्चन्द्रापीड जगज्जीवातो जैवातृक, यौतकतयेदं गन्धर्वराज्यमपि प्रतिपद्यतां पूज्यः ।

**हंसः**—(महाश्वेतां पुण्डरीकस्य हस्तेऽर्पयित्वा) मया मदीयमाधिपत्यं यौतकीकृतं मान्याय ।

**तारापीडः**—कुमार चन्द्रपीड,

दिव्यात्मा सुकृतैर्मम त्वमुदभूः पुत्रः कलासु त्वया
पाण्डित्यं महदार्जितं त्वयि कृता श्रीर्यौवराज्यच्छलात् ।
दृष्टं ते बलमष्टदिग्विजयिनस्त्वं सत्कलत्रान्वितो
दिष्ट्या संप्रति वर्धसे किमपरं संसारयात्राफलम् ॥ ४२ ॥

तद्वयमतः परमस्मिन् चैत्ररथवन एव परिगृहीतवानप्रस्थव्रता वर्तामहे । भारतवर्षाधिपत्यमपि सख्या सह भवानेव प्रतिपद्यस्व ।

**चन्द्रापीडः**—कथमेवमाज्ञापयन्ति तातपादाः ?

**शुकनासः**—युवराज, स्वीक्रियतामाज्ञा महाराजस्य; किंतु—

धीरः पञ्च निरुध्य षट् परिहरन् षण्णां प्रयोगक्षम-
स्तिस्रः संजनयंस्त्रिभिर्व्यवहरन् सिद्धिं चतुर्णां श्रितः ।
संरक्षंश्चतुरोऽपि सप्तरहितः सप्तावहन्बृंहय-
न्नाचन्द्रार्कमिहैक एव वसुधां कृत्स्नां त्वमव्याश्चिरम् ॥ ४३ ॥

(इति चन्द्रापीडपुण्डरीकयोः शिरसि परिजनोपनीतमच्छोद-सलिलसंभृतं हेमकलशमावर्जयति ।)

( नेपथ्ये दिव्यदुन्दुभिध्वनिः पुष्पवृष्टिश्च )

**कपिञ्जलः**--सखायौ, किमतः परं युवयोरत्रभवद्भ्यां प्रियं विधातव्यम् ।

**चन्द्रापीडपुण्डरीकौ**—सखे, किमतः परं प्रियमस्ति? पश्य,

अस्मासु दुःखितेषु स्वयमपि ये हन्त दुःखिताः सुचिरम् ।
सुखितेषु तेऽद्य सुखिनो गुरवः सर्वेऽपि संवृत्ताः ॥ ४४ ॥

तथाप्येवमस्तु (भरतवाक्यम्)—

धर्मैकाग्र्यं दधतु जयिनः पार्थिवा भूतधात्रीं
काले काले दिशतु भगवान् वृष्टिमिष्टां बिडौजाः ।
सन्तः सर्वे सुलभकुशलाः सन्तु संतोषभाजः
स्वान्तं चैतत् परिमृशतु नः शाम्भवीमेव भक्तिम् ॥ ४५ ॥

(इति निष्क्रान्ताः सर्वे)

---

## अष्टमोऽङ्कः ।



**कादम्बरीकल्याणं नाटकं**

**समाप्तम् ॥**

# पद्यानुक्रमणी




| | Page. | | Page. |
|---|---|---|---|
| अङ्कुरितपुलक | 127 | अवधीरितसाधु | 206 |
| अङ्गाइ जत्तिआइं | 41 | अवश्यमस्वस्थशरी | 94 |
| अङ्गैः कैतकगर्भ | 179 | अविदितपुरावृत्तः | 226 |
| अच्छोदं नवपद्म | 95 | अविदितमपक्रान्तो | 185 |
| अत्रास्थाने किल | 93 | अविरल इव रश्मिः | 121 |
| अनर्घैरमलैर्दिव्या | 74 | अवेक्षणीयमभ्यग्रैः | 210 |
| अनुचितमिति यत् | 48 | अश्रान्तरोदन | 137 |
| अन्तः प्राप्तिषु संम | 84 | अस्ति विन्ध्याटवी | 216 |
| अनिदंप्रथमोऽनुरा | 205 | अस्मासु दुःखितेषु | 236 |
| अभिमतमधिगम्य | 221 | अस्या बाहुलतायां | 42 |
| अभ्रादापततीव | 30 | अस्या मुखं मृग | 130 |
| अमृतकिरणबिम्बा | 228 | अह्नो वृक्षस्य पक्कं | 63 |
| अमृतरसमुद्गि | 64 | आकर्ण्य मया कथितं | 4 |
| अयं दशासु रूप | 3 | आकीर्णान् किल ताल | 61 |
| अयमापतितः प्रिया | 140 | आकृष्यते स्मरेण | 113 |
| अयमुपचितरागः | 28 | आघ्रातं न मुखा | 112 |
| अये कोऽयं स्रग्वी | 145 | आदावम्बुरुहं | 157 |
| अये चन्द्रालोकः | 73 | आनम्रमौलिरुचि | 124 |
| अर्धक्रान्तमृणाल | 103 | आपूर्णेन्दुसमं मुखं | 32 |

| | Page. |
|---|---|
| आबद्धाञ्जलिभिः | 6 |
| आभाति यद्वदन | 227 |
| अमुक्तमौक्तिक | 31 |
| आरब्धं द्रुतचङ्क्रमं | 38 |
| आलिप्ताङ्गी विरल | 70 |
| आलेख्यार्पितचन्द्र | 99 |
| आलोकते निभृत | 57 |
| आशंसते किमपि | 55 |
| आशां दुष्प्रसह | 7 |
| आसादितापर | 121 |
| आस्तीर्णा पुलिन | 16 |
| आस्ते हस्तधृतासि | 115 |
| आस्थानेऽस्मिन्महित | 213 |
| आहारे न रुचिर्यथा | 94 |
| आहूता न शृणोति | 163 |
| इतरेतरमेवमे | 59 |
| इति कथमियमु | 220 |
| इत्थं जाते प्रणयिनि | 146 |
| इत्थं नतभ्रु भवती | 179 |
| इत्थमन्योन्यमुद्भूत | 230 |
| इदानीं पुष्पेषो | 143 |
| इदानीं युवराज | 115 |
| इन्द्रायुधः स्वय | 13 |
| इन्द्रायुधो योऽम्भसि | 198 |
| [illegible] | 70 |

| | Page. |
|---|---|
| इष्टापूर्तैर्न निर्व्यूढः | 172 |
| इह कथमियम | 75 |
| ईदृशमनुभाव | 92 |
| उज्जृम्भतेऽस्य | 196 |
| उज्झित्वा सुहृदं | 4 |
| उड्डीनहंसयूथं | 183 |
| उत्कीर्णा किमियं | 119 |
| उदीर्णैरामूलात् | 186 |
| उद्गच्छन्ति श्वसित | 46 |
| उद्ग्रीवास्तदभि | 16 |
| उद्दिश्य मामियं स्यात् | 103 |
| उद्भिन्नपुलककेस | 44 |
| उद्भूतभावरस | 2 |
| उद्यानान्यखिल | 29 |
| उद्यानेष्विव कान | 209 |
| उन्नालाम्बुजषण्ड | 8 |
| उन्मादकत्वं वयसः | 138 |
| उन्मार्गेण प्रस्थितं | 136 |
| उन्मीलन्नवमालती | 183 |
| उन्मीलन्मणिपङ्क्ति | 83 |
| उपदिशसि यत्सखे | 138 |
| उरसि कलयंस्ता | 162 |
| एकाकिनं बालक | 173 |
| एकेनांसविलम्बि | 36 |
| एतावन्तं समय | 5 |

| | Page. |
|---|---|
| एतावन्तमनेहसं | 77 |
| एष सौहार्दमूल्ये | 77 |
| एषा तव प्रियसखी | 229 |
| एषोऽस्मि बहुभिः | 176 |
| एहि प्रसादयैनं | 144 |
| एह्यालिङ्ग विलासि | 229 |
| औचित्यैकप्रवण | 63 |
| औदार्ये संपदि | 217 |
| कण्ठे मुक्ताकलाप | 80 |
| कथमपि गतैव | 129 |
| कथमपि चिरलब्धं | 192 |
| कथमयमनुस्मृ | 221 |
| कथयतमबलायाः | 105 |
| कन्यां वराय गुणिने | 234 |
| कमलवनविकासं | 6 |
| करकमलस्य वर | 120 |
| करकिसलयेना | 102 |
| कस्मिंश्चित्तदुपान्त | 171 |
| कादम्बरीति शब्दः | 13 |
| कादम्बरीति यस्याः | 27 |
| कादम्बरीमुखस | 164 |
| का पुनरियं नत | 123 |
| कालान्तरितानि यथा | 22 |
| कास्विदियमम्बुज | 32 |
| किं कीर्णानलकान् | 108 |

| | Page. |
|---|---|
| किंतु षोडश वर्षाणि | 209 |
| किं वा कआ उण | 207 |
| किमन्यैरुपचारैः | 139 |
| किमपि विहृतियोग्याः | 172 |
| किमिदमिति गिरं | 197 |
| किमुपैति मराल | 69 |
| किसलयशयनीये | 99 |
| कुलमिव विमलं | 72 |
| कुले गन्धर्वाणां | 80 |
| कुसुमशयने विक्षि | 165 |
| कृतसमुचितदार | 174 & 209 |
| कृतसमुचिताभि | 216 |
| केत्तिअमेत्तं सहि | 159 |
| कैरवसुगन्धिमा | 68 |
| क्रीडत्कृत्रिमहंस | 97 |
| क्वचिज्ज्योत्स्नापूरः | 98 |
| क्व तन्नवमृणालिका | 164 |
| क्वनु तव गतस्त | 140 |
| क्व मृगया क्व तुरङ्ग | 17 |
| क्व वयं क्व भूरिसु | 54 |
| क्षणमनिभृतभ्रू | 40 |
| क्षणसंस्तुतोऽपि | 27 |
| गायत्किंनरमप्स | 233 |
| गीतान्युन्मदयन्ति | 115 |
| गुञ्जद्भिर्मदमञ्जु | 64 |

| | Page. |
|---|---|
| गुणातिशयपेशले | 87 |
| ग्रीवामुन्नम्य नूनं | 14 |
| चक्षूरागात्प्रभृति | 167 |
| चन्द्रापीड प्रकटय | 165 |
| चन्द्रापीडस्य यथा | 199 |
| चन्द्रेन्दीवरशङ्क | 59 |
| चातुर्विध्यममुष्य | 117 |
| चान्द्रं मण्डलमान | 210 |
| चित्तमार्द्रमनुजी | 168 |
| चिरात्प्रणयिनं जनं | 184 |
| जटाभिरभितस्त | 120 |
| जन्मान्तरे नु दृष्टा | 119 |
| जय जय जगद्विनो | 3 |
| जयति संसारतरोः | 117 |
| जानात्येव हि तन्न | 2 |
| जाने मन्मथवैशसं | 169 |
| जावक्खु मह्नु णिपाउं | 118 |
| जीमूतेन विना कदा | 109 |
| जो कोवि पडिमा | 202 |
| ज्योत्स्नाभिर्विमला | 189 |
| त एव विपणीपथाः | 213 |
| तं एव्व चन्दसेहर | 18 |
| तत्रायातः शुकत्वं | 217 |
| तथापि सौहार्द | 55 |
| तद्वक्त्रं मम तृप्तये | 88 |

| | Page. |
|---|---|
| तनुतरमिदमङ्ग | 70 |
| तनुपवनचल | 155 |
| तर्हि क्व पत्रलेखा | 201 |
| तस्येवास्यापि मूर्ध्ना | 114 |
| तस्यैष मध्यमः पुत्रः | 2 |
| ताताज्ञागौरवात् | 153 |
| तादृशरूपातिश | 24 |
| तामप्राप्य मृगेक्ष | 182 |
| ताम्बूलदानसम | 88 |
| तारापीडसुते रतिं | 7 |
| तिलकाञ्चितद्विरे | 132 |
| त्वं भृङ्गश्रियमश्नु | 155 |
| त्वयि कृतपदस्तापः | 158 |
| दिव्यात्मा सुकृतैः | 235 |
| दुष्टसत्त्वबहुले | 56 |
| दृष्टं यद्यपि तन्मु | 158 |
| दूरं मुक्तालतया | 134 |
| देवि प्रसी दनिद्रे | 83 |
| देशाद्दवीयसोऽपि | 154 |
| देशान्तरितयोर्यू | 156 |
| देशोऽयमभिमत | 116 |
| घण्णासि कण्णलग्गा | 126 |
| धर्मैकाग्र्यं दधतु | 236 |
| धारानुपातस्य | 181 |
| धीरः पद्म निरुध्य | 235 |

| | Page. |
|---|---|
| धृतं कनकपञ्जरे | 218 |
| धृतोत्कम्पात्पाणेः | 44 |
| ध्यायन्तीव महीरुहः | 188 |
| नटविलसितमात्रं | 122 |
| ननु विरहितः स | 116 |
| नन्वेष याति नय | 166 |
| नमितोन्नमितान | 11 |
| नवकिसलयैः | 138 |
| निःशेषदत्तकल | 75 |
| निजं पदं भाग्य | 34 |
| निद्रामुद्रां विधू | 149 |
| निभृतानुरक्तिर | 62 |
| निमित्तं चित्तविक्रि | 150 |
| नियमयति सखीं | 42 |
| निर्निद्रनीलनलिनी | 125 |
| निर्निद्रैरपि नोद्गि | 210 |
| निर्व्याजप्रणयित्व | 55 |
| निवृत्तेयं वरारोहा | 82 |
| निशम्य वार्तां सुहृ | 175 |
| निशावसाने नियतं | 148 |
| नूनं शालीनयोरेवं | 57 |
| नैराश्यमुन्मुच्य | 23 |
| पश्चैः प्राप्तमुखोपमैः | 132 |
| पन्थास्तत्रैष रात्रौ | 29 |
| परितापनिःसह | 104 |
| परिरब्धुमङ्गमस्याः | 37 |
| पर्यामृष्टललाम | 47 |
| पर्यावर्तितकंधरं | 14 |
| पादाग्रेण स्पृशन्त्यां | 59 |
| पार्श्वे गुरोः कति | 201 |
| पुनरपि यते घट | 146 |
| पुरहरललाटन | 202 |
| पुरैव कृशतां गतं | 166 |
| पुष्पं फलं च वित | 19 |
| पूर्णेन्दुप्रतिमं तदेव | 213 |
| पूर्वापराधपरुषे | 230 |
| प्रतिभासाधारण्यात् | 134 |
| प्रथममसि मया | 197 |
| प्रथमेऽभिवाञ्छित | 161 |
| प्रशिथिलसन्ध्या | 68 |
| प्रसह्य येन प्रति | 225 |
| प्राग्जन्मवृत्तमि | 220 |
| प्रेङ्खद्गोमहिषी | 208 |
| प्रेमार्द्रचेताः स्पृह | 78 |
| बालोद्यानप्रहित | 154 |
| बाष्पैर्लोचनशुक्ति | 20 |
| भक्तिः पित्रोः प्रकृति | 221 |
| भव एष भवत्यना | 126 |
| भारतवर्षमखण्डं | 114 |
| भावोद्भेदमिमं | 46 |

| | Page. | | Page. |
|---|---|---|---|
| भावो भावान्तर | 142 | रक्तपाटलमुपोढ | 43 |
| भूत्वा तदा हृदय | 90 | रसिकः कविरद्भुता | 1 |
| भृङ्गानङ्गुलिभिः | 33 | रागोऽयमीदृशोऽस्याः | 71 |
| भ्रुकुटिमलिके स्वैरं | 129 | रूपं निर्जितपञ्च | 122 |
| भ्रूभङ्गीं सुरकार्मु | 182 | रूपयौवनयोरस्याः | 17 |
| मणिभङ्गनिर्मल | 65 | ललन्तं सौधाग्रे | 56 |
| मदकलकलहंस | 15 | वकुलकुसुमपात्री | 122 |
| मन्दानिलेन मधु | 191 | वदनं स्फटिकाक्ष | 127 |
| मम प्राणेषु चेदा | 25 | वद हृदय किमपि | 54 |
| मयानुयुज्यमाने | 185 | वयस्यो नर्मगोष्ठीषु | 191 |
| महाश्वेतायास्त | 89 | वयस्यो नैवास्यां | 184 |
| महिलाओ होन्तु | 13 | वातायनान्तिक | 49 |
| मीलत्पद्ममुखी | 64 | वात्सल्यनिघ्नम | 169 |
| मुग्धमहिलाप्रलो | 92 | वामभ्रुवोविलास | 160 |
| मुच्यन्तां शुकशा | 195 | वारंवारं मदन | 179 |
| मुनेरंशावतारस्त्वं | 233 | वासः पल्लवराग | 214 |
| मुहुः कण्ठे सख्याः | 58 | विदितमनसा | 160 |
| मुहुरूपचिताशंसा | 164 | विद्यास्वस्य विश्रु | 170 |
| यतस्त्वां प्रासादात् | 93 | विभ्रमचलितैर्नेत्रैः | 31 |
| यत्किंचिदप्यकुशलं | 232 | विलसत्पुलका | 76 |
| यदभवदयं रक्तः | 5 | विलोकयितुमान | 79 |
| यदिदं नरनिर्विशे | 13 | विविधैरियं विला | 58 |
| यदि नाम भजेदियं | 61 | विस्मृत्य यत्किमपि | 149 |
| युगपदिव मिलन्ति | 142 | वैलक्ष्यं परिहाय | 159 |
| येनोपचारशत | 72 | वैशम्पायनवृत्ता | 195 |

| | Page. | | Page. |
|---|---|---|---|
| व्यतिकरितमृणालः | 15 | सुख इव सुहृदो | 110 |
| व्रीडामन्थरभाव | 54 | सुलहो खु इत्थि | 159 |
| शक्यमिदानीं लब्धुं | 2 | सेयं लोकान्तरगत | 229 |
| शमप्रधानाः क्व | 136 | सैन्यं वामदृशो | 130 |
| शाकुन्तलादीनि | 150 | सोत्कम्पस्तनमे | 31 |
| शालीनतया मिथु | 112 | सोऽयं क्रीडागिरि | 157 |
| शिरीषं लग्नालि | 56 | सौहित्यं विदधाति | 1 |
| शुभमशुभं वा | 12 | स्तनचन्दनपङ्क | 112 |
| शैत्यमिव चन्द्रिका | 40 | स्तनयुगमश्रु | 215 |
| श्रान्तावदातोज्ज्वल | 17 | स्त्रीसृष्टिनैपुण | 166 |
| श्रान्तोऽसि दूरमट | 15 | स्थाने तवाभिलाष | 93 |
| श्रीकण्ठद्रवशीत | 96 | स्थूलाश्रुग्रथिताग्र | 133 |
| श्रीमण्डपं लिखित | 156 | स्पृशतु सरणीराला | 18 |
| श्रुतया श्रवो यथा | 25 | स्फुटत्कुटजमुग्मि | 177 |
| श्वेतच्छत्रमिदं प्रसू | 80 | स्वप्नोपलब्धमपि | 95 |
| संतापं किल सोढुं | 14 | स्वाच्छन्द्याम्रियते: | 222 |
| स चन्द्रमाः सोऽपि | 4 | हंसात्मजायाः शुक | 182 |
| सत्यमनृतेन तेजः | 128 | हंसावलीव गङ्गां | 75 |
| सत्याधिष्ठानतस्ते | 197 | हस्तान्केचन वर्त | 3 |
| सद्भावातिक्रमचेत | 12 | हा मातः कमले | 143 |
| सर्वोर्वीजयिना | 152 | हारीतस्य न हि | 208 |
| साकल्यतो न शक्यं | 34 | हित्वा वल्कलयोः | 228 |
| सा चापि काञ्चन | 88 | हृदयमपदे बद्धो | 132 |
| सा निर्याति विनापि | 165 | हृदय विरहय्य | 49 |
| सा नूनं स्यादियं | 32 | हृद्यामोदैः कृत | 207 |
| सीमन्तरत्नरुचि | 39 | ह्रीबेरैः क्रियतां | 96 |

## *CORRIGENDA.*

| PAGE | LINE | FOR | READ |
|---|---|---|---|
| 18 | 2 | चन्द्र | चन्द |
| 91 | 1 | आत्मना तृतीयः | आत्मनातृतीयः |
| 95 | 16 | मनसः | मनसे |
| 213 | 8 | राजपुत्रः | राजपुत्रैः |